मेवोच्चरितप्रध्वंसित्वात् । एवं तर्हि ढलोपसाहचर्यात् 'रो रि' (८-३-१४) इति रेफलोपो ग्राह्यः । वृक्षास्तिष्ठतीत्यत्र 'तस्मिन्निति' (१-१-६६) परिभाषया विसर्जनीयव्यवधानादपि दीर्घाभावात् ॥

## प्रत्ययलोपे प्रत्ययलक्षणम् ।६ २ ।

कथं भवतीति, क्विपोऽदर्शने लोपसंज्ञायाः प्रत्ययलक्षणे सतीवर्णस्य तुक्प्रसङ्गात् । न च लोपश्रुत्या विहितस्य प्रत्ययलक्षणं, यत 'आयादय आर्धधातुक' (३-१-३१) इत्यत्र न्यास उक्तम्—'आयादीनां पक्षे निवृत्तिः प्रवृत्तिर्वा । तत्र यदि वाग्रहणेनायादीनां निवृत्तिः स्यात्, तदा प्रत्ययलक्षणेन अ प्रत्ययाद् (३-३-१०२)इत्यकारः स्याद्' इति । उच्यते । तथा अदर्शनसूत्रे (१-१-६०) त्रपुजतुभ्यां स्वमोर्लुकि कृते क्विपो लोपस्य प्रत्ययलक्षणेन तुकमाशङ्क्य न्यासकृता स्थानिवत्सूत्रात् स्थानिवद्ग्रहणमनुवर्त्य स्थानी प्रसङ्गवान् इति प्रसक्तस्यादर्शने प्रत्ययलक्षणमुक्त्वा धात्वधिकारात् क्विपोऽप्रसङ्गेन तुगभाव उक्तः । ननु यदि प्रत्ययप्रसङ्गे प्रत्ययलक्षणं, तदा ग्रामणीरित्यत्राणः प्रसङ्गे 'सत्सूद्विष' (३-२-६१) इत्यादिना क्विपि प्रसक्तस्याणः प्रत्ययलक्षणेन वृद्धिः स्यात् । उच्यते । 'पूर्वमपवादाः प्रवर्तन्ते पश्चादुत्सर्गा' इत्यणः प्रसङ्ग एव नास्ति । कथं गोहितम् । प्रत्ययलक्षणेन चतुर्थ्येकवचनाश्रयावादेशात् । उच्यते । 'प्रत्ययलोपे तल्लक्षणम्' इति वक्तव्ये प्रत्ययग्रहणेन ज्ञापितं वर्णाश्रयविधौ प्रत्ययलक्षणं नास्तीति । तेन गवे हितं गोहितमिति नावादेशः । यद्येवं कथमतृणेडिति लोपे हलि विधीयमानः 'तृणह इम्' (७-३-९२) इतीम् । उच्यते । स हि हलादौ सार्वधातुके, न तु वर्णमात्रे । एवं हि गोद्रत इति सुब्दित्यत्र क्विपि वलाद्याश्रय इट् स्यात् । उच्यते । 'शास इदङ्हलोः' (६-४-३४) इत्यत्र न्यास उक्तम्—परिभाषेयमनित्येति ॥

---

१. पूर्वस्येति तु इहोत्तरपदाधिकारादनुत्तरपदेऽपि पूर्वमात्रस्य दीर्घार्थम्, न पुनः परिभाषाबाधार्थम्. २. इह इत्यत्र तु निर्दिष्टग्रहणेन परिभाषायाः सप्तमीनिर्दिष्टशब्दविषयतावगमाद् द्रूलोपे शब्द एव परतो दीर्घ इष्यमाणस्याशब्दत्वादेव दीर्घाभावः सिद्ध इत्याहुस्तम्. ३. प्रसक्तश्च सामान्यतो ज्ञेयः. ४. प्रत्ययग्रहणेन वर्णनिष्ठगतासाधारणरूपाश्रयस्यैव कार्यस्य तत्प्रत्ययलोपेऽपि प्रवृत्तिबोधनाद्वर्णाद्व्यावर्तमानमनाश्रित्य कार्यं वर्णप्राधान्यनिबन्धनमेव भवितुमर्हतीति कथमिमः प्रत्ययविशेषणीभूतवर्णाश्रयस्यापवृत्तिरितीलाभिमानविधानाद्—स हि हलादौ इत्यादि. वर्णमात्रे केवले वर्णे इत्यर्थः. केवलत्वं चेतरविशेषणत्वं प्राधान्यमिति यावत्.

## न लुमताङ्गस्य । ६३ ।

कथम्—

'अभिमुखमुपयाति मास्म किञ्चित् त्वमभिदधाः पटले मधुव्रतानाम् ।
मधुसुरभिमुखाब्जगन्धलुब्धैरधिकमधित्वदनेन मा निपाति ॥'

इति माघः । त्वय्यर्धात्यव्ययीभावे त्वादेर्लुकि त्वादेशाभावात् । उच्यते । 'इकोऽचि विभक्तौ' (७-१-७३) इत्यत्राज्ग्रहणेनाम्यानित्यत्वज्ञापनात् प्रत्ययलक्षणेन त्वादेशात् । त्वादिति विभक्तिप्रतिरूपमव्ययं त्वय्यर्थे इति वा । यौ तु सर्वादौ त्व त्वादिति पठ्येते, तावन्यार्थौ ॥

इति शरणदेवविरचितदुर्घटवृत्तौ
प्रथमाध्याये प्रथमः पादः ।

---

## अथ द्वितीयः पादः ।

## गाङ्कुटादिभ्योऽञ्णिन्ङित् । १ ।

कथं धवित्रं व्यजनम् । 'अर्तिलूधू' इत्यादिना इत्रचि 'धू विधूनने' इत्यस्य कुटादित्वाद् गुणाभावात् । उच्यते । 'ओरोद्' इति वक्तव्ये 'ओर्गुणः' (६-४-१४६) इति गुणग्रहणेन ज्ञापितः संज्ञापूर्वको विधिरनित्यः । तथा कुटस्यादिः कुटादिरित्येकशेषेणान्तर्भावाल्लिखेः कुटादित्वम् । कथं तर्हि (मधुप्रसूर्लेखनीति?) 'अपाद्यतुप्याच्छकुनिष्वालेखन' (६-१-१४२) इति निर्देशात्, रद विलेखन इति निर्देशाच्च । 'व्यचेः कुटादित्वमनसि' इति वक्तव्यम् । कथं विव्यचिथेति, सम्प्रसारणप्रसङ्गात् । उच्यते । अनसीति पर्युदासात् लिटो ङित्वाभावादिति धातुपारायणे । धातुवृत्तौ तु सम्प्रसारणमाश्रित्य विविचिथेत्युक्तमिति रक्षितः ॥

---

१. अनित्यत्वेति नित्यत्वे ह्यनेन प्रत्ययलक्षणप्रतिषेधाद्विभक्त्यभावादेव नुम् न भविष्यतीति किं तद्वारणार्थेनाज्ग्रहणेन २ एकशेषश्च तत्पुरुषबहुव्रीह्योः ३ कुटादित्वमिति तद्य लिखितुं लिखिष्यत इति प्रयोगनिर्देशाय ४. उक्तनिर्देशान्यथानुपपत्त्यैव लिखेः कुटादित्वममन्यमानः संज्ञापूर्वकविध्यनित्यतया लिखितुमित्यत्र गुणाभावं वदति हरदत्तः; धवित्रमिति च कल्पसूत्रप्रयोगश्छान्दसत्वादुपपादनीय इत्याह- ५ पर्युदासादिति पर्युदस्यमानाच्छन्प्रत्ययस्तोऽर्थाद् कृत्प्रत्यये कार्यविज्ञानादित्यर्थः-

## विज इट् । २ ।

कथम् 'उद्वेजिता वृष्टिभिराश्रयन्ती' इति कुमारसम्भवः । उच्यते । ण्यन्तादिति भागवृत्तिः । 'प्रकृतिग्रहणे ण्यधिकस्यापि ग्रहणम्' इति चेत्, न ह्यन्यविषयोऽयं 'न भाभूपूकमिगमि' (८-४-३४) इत्यादौ ण्यन्तानां च भादीनामुपसङ्ख्यानम्' इति वचनात् । णिच्यन्तरङ्गत्वात् पूर्वं प्रत्ययाद् गुण इति वा ॥

## असंयोगाल्लिट् कित् । ५ ।

कथं 'न सम्पपृच्छे गमनाय सत्वरा' इति घोषः । संयोगान्तत्वात् कित्त्वाभावात् । उच्यते । अपशब्द एवायम् । अथवा 'यजयाचयतविच्छप्रच्छरक्षो नङ्' (३-३-९०) इति नङो ङित्त्वेनागमशासनानित्यत्वात् तुकोऽभावे कित्त्वात् सम्प्रसारणे कृते ऋकाराश्रयस्तुक् ॥

## इन्धिभवतिभ्यां च । ६ ।

कथमस्तेर्भूभावे बभूवेति, भवतीति श्तिपा निर्देशात् । उच्यते । नित्यशब्दान्वाख्याने 'अस्तेर्भूः' (२-४-५२) इत्यनेनास्तेः प्रसङ्गे भवतेः प्रयोगः साध्यते । अथवा 'भवतेर' (७-४-७३)इत्यत्र यदुक्तमनुन्यासकृता 'अवश्यं हि यया कयाचिद् व्यक्त्या निर्देशः कर्तव्य इति भूव्यक्त्या निर्देशः कृतः; कोऽत्र प्रद्वेषः कृतः ॥

## हलन्ताच्च । १० ।

कथं दिदृक्षते सिसृक्षते । कित्त्वात् परत्वात् 'सृजिदृशोर्झल्यमकिति' (६-१-५८) इत्यम् स्यात् । उच्यते । पूर्वविप्रतिषेधात् कित्त्वम् ॥

---

१. न ह्यन्येत्यादि. 'हेरचङि' (७-३-५६) इत्यचङ्ग्रहणेन चङोऽन्यत्र णनाविष्टे ण्यधिकस्यापि कुत्वं भवतीत्येव ज्ञापनाद् 'ण्यन्तानाञ्च भादीनाम्' इत्युपसंख्यानानुगुण्याच्च नायं न्यायो द्वित्वातिरिक्तविषय इत्यर्थः. २. न्यायस्य व्यापकत्वाभिमानेऽप्याह—णिचीत्यादि. पूर्वं प्रत्ययात् क्तप्रत्ययोत्पत्तेः प्राक्. ३. ञित्वं हि विच्छौ तुकारस्यानुपधात्वेन गुणाप्रसक्तौ प्रच्छौ च 'प्रश्ने च' (३-२-११७) इति निपातनेन सम्प्रसारणाभिनिष्ट्यर्थं सत् तुगागमाप्रवृत्तिं वा शादेशविधौ सतुक्च्छकारस्य स्थानित्वेन परिग्रहं वा ज्ञापयित्वैव सार्थकं वक्तव्यम्. ४. श्तिपा निर्देशादिति. तेन हि 'भू सत्तायामि'ति पठितस्य ग्रहणेऽपि 'भव शुद्धौ' इत्यस्य ग्रहणं न प्राप्नोति. ५. भवतेः प्रयोगः साध्यते इति. भवतिश्च सिद्ध एव. न त्वस्तेर्भूरूपमपूर्वं उच्यते. तथा चास्तेरग्रहणेऽपि दोषाभावः. ६. कार्यशब्दवादे नित्यानित्यत्व-विषयोर्नित्योऽस्तेः सम्बन्धिनी 'भू' इत्येवरूपा नित्यान्यव्यक्तिरप्येकदेशेन भवतिनिर्देशोऽन्तर्भाव्यत इत्याशयादाह—अथवेत्यादि ७. परत्वादिति. अपरनिमित्तकत्वेऽपि समानशब्दाश्रितत्वात् कित्वस्य नान्तरङ्गतेति मन्यते.

## निष्ठा शीङ्स्विदिमिदिक्ष्विदिधृषः । १९ ।

**कथम्** उड्डयित डीङोऽत्रापाठादकित्त्वाभावात् । उच्यते । 'भौवादिकस्य डीङो निष्ठायामकित्त्वम्' इति धातुपारायण । दैवादिकस्य डीङ ओदिता मध्ये पाठसामर्थ्यादनिट्त्वं नत्व च । तेनोड्डीन इति ॥

## रलो व्युपधाद्धलादेः संश्च । २६ ।

**कथं** नित्य कुटित्वा । परत्वादनेनैव विकल्पिताकित्त्वात् । **उच्यते** । पूर्वविप्रतिषेधेनान्तरङ्गत्वाच्च कुटादित्वमात्रम् ॥

## ह्रस्वो नपुंसके प्रातिपदिकस्य । ४७ ।

**कथं** वनाय वनेभ्य इति दीर्घत्वैत्वयो कृतयोर्ह्रस्वत्वप्रसङ्गात् । **उच्यते** । 'असिद्ध बहिरङ्गमन्तरङ्गे' इति ह्रस्वे कर्तव्ये दीर्घत्वादेरसिद्धत्वाद् । अथार्थधर्मस्य नपुंसकलिङ्गस्याश्रयणाद्ध्रस्वोऽपि बहिरङ्ग । एवं तर्हि परस्मैपदेष्विति निर्देशान्न ह्रस्व । **वने** इति द्विवचनान्तस्य सप्तम्यन्तस्य च पूर्वं प्रत्यन्तवत्त्वेन ह्रस्वत्वम् । **उच्यते** । उक्तकर्मादिशक्तिकत्वेनानपुसकत्वात्, प्रथमाद्विवचनस्य तु अर्थवद-धातु' (१-२-४५) इत्यत प्रातिपदिकग्रहणानुवृत्तौ पुन प्रातिपदिकग्रहणान्निष्कृष्टप्रातिपदिकाश्रयणात् । अपर बहुत्वान्नोक्तम् ॥

## गोस्त्रियोरुपसर्जनस्य । ४८ ।

**कथं** अधिपिप्पलीति, 'एकविभक्ति च' (१-२-४४) इत्युपसर्जने ह्रस्वत्वप्रसङ्गात् । **उच्यते** । 'एकविभक्तावषष्ठ्यन्तवचनम्' इति कात्यायनवार्तिकेनोपसर्जननिषेधादिति भाष्यम् । 'एकविभक्ति चे'त्यत्र विभाषानुवृत्तेर्व्यवस्थितविभाषा-

१ तथा च कुटादित्वप्रयुक्तनित्यङित्वस्य बाधात् कित्वत्वापि पक्षे भाव्यमित्यर्थ २ अन्तरङ्गत्वम पापेक्षत्वात् ३ दीर्घत्वादेर्बहिरङ्गता च सुपोऽधिकस्यापेक्षणात् ४ सुपपेक्षाया स्थाने लिङ्गापेक्षाया सत्त्वान्नान्तरङ्गो ह्रस्व इत्याशयेनाह — अथेत्यादि ५ उक्तेत्यादि अन्तवत्त्वेन प्रातिपदिकत्वेऽपि विभक्त्यन्तस्य कर्माधिकरणशक्तिप्रधानत्वेन नपुसकलिङ्गयुक्तद्रव्यप्रतिपादकत्वाभावादित्यर्थ ६ प्रथमान्त शब्दप्रयोगानन्तरविरहेण नपुसकद्रव्यवृत्ति भवत्येवेति तत्र पृथक् परिहारमाह — प्रथमेत्यादि प्रातिपदिकग्रहणानुवृत्ताविति नपुसकद्रव्यवाचित्वस्य धात्वादिष्वभावादर्थात् प्रातिपदिकलाभ इति कैयट निष्कृष्टेति मुख्येत्यर्थ तेनातिदिष्टप्रातिपदिकव्यावृत्ति एष एव तु परिहारो द्वितीयान्तसप्तम्यन्तयोरपि द्रष्टव्य, यत्कारण नपुंसकवृत्तेरनपुसकवृत्तेर्वर्णादेशा नपुसकवृत्तिग्रहणेन गृह्यन्त एवेत्ययुक्त प्राक्तन परिहार ७ अनुवृत्तेरिति. सा च 'विभाषा छन्दसि' (१ २-३६) इत्यत

त्वाद्'' इति न्यासः । 'उभयगतिरिह शास्त्रे सम्भवतीति लौकिकोपसर्जनत्वान्न ह्रस्वः शास्त्रीयोपसर्जनस्य, लौकिकोपसर्जननिवृत्त्यर्थं यत्नसामर्थ्यात् । ह्रस्वे वा परवल्लिङ्गतया स्त्रीप्रत्यय. प्रत्युज्जीव्यत' इत्यनुन्यासः ॥

## अस्मदो द्वयोश्च । ५९ ।

'सविशेषणानां प्रतिषेधो वक्तव्यः' इत्युक्तम् । कथं पुनर्न वयं वैयाकरणा इति । उच्यते । ईश्वरादिवदेकत्वे बहुत्वारोपात् ॥

## फल्गुनीप्रोष्ठपदानां च नक्षत्रे । ६० ।

कथं पूर्वफल्गुनी । नक्षत्रद्वित्वे बहुत्वातिदेशात् । उच्यते । पूर्वोत्तरफल्गुन्यौ द्वे प्रोष्ठपदे च द्वे इत्यत्र सूत्रे बहुवचननिर्देशाद् बहुत्वं विवक्ष्यते, द्वयोरित्यनुवृत्तेर्द्वित्व एव बहुत्वारोपात् । ईयमल्पिका । आतिदेशिक कार्यमनित्यमिति वाच्यम् ॥

## पुमान् स्त्रिया । ६७ ।

कथं भवश्च भवानी च भवौ रुद्रावित्यादि, तल्लक्षणश्चेदेव विशेष इत्यनुवृत्तेः; अस्तीह हि पुंयोगकृतो भेद ; इन्द्रेन्द्राण्यावित्यत्र प्रत्युदाहृतम् । उच्यते ।

१ यत्नश्च 'ईयसो बहुव्रीहेर्नेति वाच्यम्' इत्येवरूप . अथ लौकिकोपसर्जनग्रहणेऽपि कथ दोषवारण, यावता पिप्पलीशब्दोऽपि पूर्वपदार्थे गुणीभावाल्लौकिकमुपसर्जन भवति यथा कौशाम्बीशब्दो निष्कौशाम्बौ किञ्च यत्नोऽय शास्त्रीयोपसर्जननिवृत्त्यर्थोऽपि काम स्यात्, बहुव्रीहौ श्रेयसीत्यादेर्नियतविभक्तिकत्वेन शास्त्रीयोपसर्जनताया अपि भावात् अवश्य चेह शास्त्रीयोप सर्जनस्यैव ग्रहण विज्ञेयम्, अन्यथा हरीतक्य (फलानि) कुमारी (कुमारीवाचरन्) इत्यत्रापि ह्रस्वत्वप्रसङ्ग अतो ह्रस्वमभ्युपगम्य समाधत्ते — ह्रस्वे वेत्यादि २ प्रत्युज्जीव्यत इति परपदभूतपिप्पलीशब्दलिङ्गातिदेशेन हि पिप्पलीशब्दसम्बन्धि लिङ्गकार्यं गौरादिङीप्लक्षण समागाद्विष्यतीति सिद्धमीकारस्य प्रत्यानयनम् ३ कथ पूर्वेत्यादि द्वयोनक्षत्रयो फल्गुनीप्रोष्ठपदाख्ययोर्द्धेवयवज्योति समुदायात्मनोरवयवाना स्वभावत उद्भूतत्वेन चतुष्ट्वात् सूत्रे बहुवचनमिति फल्गुनीप्रोष्ठपदाशब्दयोर्द्विवचनान्तताया एव पक्षे प्रामाणिकत्वप्रतीतेरेकवचनप्रयोगोऽनुपपन्न इति शङ्काग्रन्थार्थ ४ द्वित्वेति अन्यतरस्याग्रहणानुवृत्त्या हि पक्षेऽभ्यनुज्ञायमान द्वित्व वस्तुतोऽवयवाश्रयमेवारोपित समुदाय इति तदप्यनिदिष्टम् ५ पूर्वोत्तरेत्यादि अय माशय — अवयवसमुदायात्मना पूर्वोत्तरत्वभेदेन भिन्नाना चतुर्णामेव नक्षत्राणा विवक्षणेन सूत्रे बहुवचनस्य निर्देश तेषु चैकस्मिन्नवयवभेदोद्भूतत्व विवक्षामात्रायत्त यदा विवक्षिता द्वित्वमारोपित, तदैव पाक्षिक बहुवचन विधीयते न तु तदनुद्भूतत्वविवक्षायामेकवचन न्यायप्राप्त प्रत्याख्यायते इति ६ इयमिति युक्ति समर्थना वा योग्यत्वात् ७ का तर्हि तदल्पत्व्यसमाहिका समर्थनेत्याकाङ्क्षायामाह — आतिदेशिकमित्यादि ८ 'हस्वादेर्नेश्शेषोऽन्येण.' इति च काव्यालङ्कारे वामन

'पुमान् स्त्रिया' (१-२-६७) इत्यत्र न्यासकृता 'पुमान्' इति योगविभागः कृतोऽस्य सिद्धये । यद्यप्यानुक् पुंयोगमपेक्षते, तथापि स्त्रियां विधानात् स्त्रीकृत एवायं भेदः । कथं वा दासीदासं कुटीकुटम् । उच्यते । 'गवाश्वादिषु पाठसामर्थ्यान्नैकशेषः' इति न्यासः ॥

इति शरणदेवविरचितदुर्घटवृत्तौ

प्रथमाध्याये द्वितीयः पादः.

---

अथ तृतीयः पादः.

## भूवादयो धातवः । १ ।

कथं भवतीति, ऊकारस्येत्संज्ञाप्रसङ्गात् । उच्यते । निरनुनासिकत्वान्नेत्त्वं, 'प्रतिज्ञानुनासिक्याः पाणिनीयाः' इति । प्रयोजनाभावाद्वा । न 'स्वरतिसूती' (७-२-४४) त्यादिना इड्विकल्पः प्रयोजनं, 'भूसत्तायां परस्मैभाष उदात्तः' इति उदात्तोपदेशानर्थक्यात् । तन्नित्यमिडर्थं । न च गाप्रभृतीनामिवोदात्तत्वमनुदात्तनिवृत्त्यर्थं वाच्यं, निरच्कत्वादनुदात्तत्वाप्रसङ्गात् ॥

## हलन्त्यम् । ३ ।

कथं पुष्टिः, अनेन हि षकारस्येत्संज्ञया भाव्यम् । तथा च पुष्णातीत्यादि न सिध्यति । उच्यते । अनभिधानान्नैतत् । एवञ्च प्रयोजनाभावान्नेत्त्वम् । कथमटतीत्यादि, अनेन तु टकारलोपात् । प्रयोजनं तु टित्त्वात् ङीप्, यथा 'नासिकास्तनयोर्ध्माधेटोः' (३-२-२९) इत्यत्रोक्तम्—स्तनन्धयीति धेटष्टित्त्वात् ङीप् । एवमादीनामकार इत्संज्ञापरित्राणार्थो, नोच्चारणार्थः । यथा 'इदमस्थमुः' (५-३-२४) इत्यत्रोकारः । कथं भवतीति, वकारस्येत्त्वप्रसङ्गात् । उच्यते । प्रयोजनाभावान्नेत्त्वम् । न च 'वान्तो यि प्रत्यये' (६-१-७९) इति विशेषणं प्रयोजनम्;

---

१. अन्यथा समाधत्ते—यद्यपीत्यादि अपेक्षत इति स्वसन्नियोगिङीष्द्वारेणेति शेषः इन्द्रादिषट्कमातुलाचार्येषु ङीप् 'पुंयोगाद्' (४-१-४८) इति हि सिद्धः. २ स्त्रियां विधानादित्यादि. यद्यानुक् पुंयोगे व्यधास्यत, तदा नक्कृतोऽयं विशेषोऽभविष्यदित्यर्थः. ३. तदिति. उदात्तत्वम्.

अन्यथा गव्यति नाव्यतीत्यत्र यान्तादेशोऽपि स्यात् । 'वान्तो यी'त्यत्र 'अयान्तो यी'ति कर्तव्य स्यात् ॥

## न विभक्तौ तुस्माः । ४ ।

कथं क, यजेयेति । 'किमोऽत्' (५-३-१२) 'इटोऽत्' (३-४-१०६) इत्यत्र स्थानिवद्भावादनेनेत्त्वनिषेधात् । उच्यते । 'अनित्यत्वादस्य विधे.' इति वृत्ति. । 'इटोऽदित्यत्रोक्तम्—नायमादेशावयवस्तकार । किन्तर्हि मुखसुखार्थ उच्चार्यते' । एवञ्च 'अनित्यत्वादस्य विधे' इत्यत्रायमर्थो वेदितव्य — 'किमोऽदि'त्यत्रेत्त्वनिषेधस्यानित्यत्वात्, 'इटोऽत्' इत्यत्रास्य विधेरकारस्य विधानाद् इति केचित् ॥

## यथासङ्ख्यमनुदेशः समानाम् । १० ।

कथं भवतीति । अत्रायादेश कस्मान्न भवति, यथासङ्ख्याभावात् । तद्धि दिशोरुच्चारणार्थत्वाच्छ्रुतानुमितन्यायाच्च श्रुतयोरुद्देशानुदेशिनोर्युक्त यथा 'तूदीस-लातुर (४ ३-९४) इत्यादौ । उच्यते । श्रुतन्यायफलस्यान्तरङ्गस्यानित्यत्वादिशे प्रतिपादनवृत्तित्वाच्च सामान्येन यथासङ्ख्यम् । 'परस्मैपदानाम्' (३-४-८२) इत्यादौ यथासङ्ख्यार्थ स्वरितत्वसामर्थ्याद्वा । तथा च रक्षित — 'स्वरितत्वसामर्थ्यात् क्वचिदर्थत क्वचिच्छब्दात् सामान्यमाश्रीयते' इति । एव च परस्मैपदादि-

---

१ अन्यथेत्यादि असति वान्तग्रहणे पूर्वसूत्रानुवृत्तौ 'क्षय्यजय्यौ शक्यार्थ' (६-१ ८१) इत्येकारस्यायादेशनिपातनारम्भेणातात्स्यर्थ्यैव स्थानिबपर्यालोचनादोकारौकारयो स्थानेऽय वायावा चतुर्णामादेशानामविशेषेण विधानप्रसङ्ग वान्तग्रहणेन पुनरयायोर्व्यावर्तनाददोष इति भाव प्रयोजन प्रस्याचष्टे—वान्तो यीत्यत्रेत्यादि अयान्तो यि प्रत्यये' इति करणेऽकारस्याधिक्य तु न शङ्कय, सहितया पाठे पूर्वरूपात् २ अनित्यत्वाद्य प्रतिपेधविधे 'इदमस्यमु' इत्युकारेण शप्यते, नित्यत्वे ह्यनेनैव मकारो विभक्तिरथ इत्याद्यागमनाशात् नातु शक्य इति विमुकारेण ३ वृत्तिरिति काशिकाया ि किमोऽत् इटोऽत् इत्यत्र प्रतिषेधो न भवति' इत्युक्त्वोक्तमिदम् ४ तथा न केवल एवाकारो विधीयते, न तु किमोऽदित्यनेन तकारानुब न्धवानिति नि स्वराभाव इति वृत्त्याशय ५ केचिदिति अस्वरसमूचनम् इटोऽदित्येनद्विषये 'इत्त्व न' इत्यश्रुतसाध्यकल्पने क्लेशात् ■ न्यायश्च 'श्रुतानुमितयो श्रुतसम्बन्धो बलीयान्' इति ७ श्रुतन्यायस्य प्रतियोग्यभावादाह—श्रुतन्यायफलस्येति पर तु श्रुतसम्बन्धो ऽश्रुतसम्बन्धेनानुमानद्वारकेण सप्रतियोगीति भाति ततोऽन्तरङ्ग ■ समत्वमेवर्थ • यथासङ्ख्यसूत्रेऽपि स्थानेनेत्यस्य सम्बन्ध मन्यते

सञ्ज्ञानुमितस्य तिप्तसादेर्यथासङ्ख्यं णलादि। ऐकत्वाद्यभिधानादान्तरतम्याच्च 'लुट' (२-४-८९) इत्यत्र डादि। सञ्ज्ञानुमितयो ककवत्त्वो 'डासिङसोश्च' (६-१-११०) इत्यत्रैङ एकारौकारयोश्चास्वरितत्वान्न यथासङ्ख्यम्। अथवा आन्तरतम्याद्यादयो भविष्यन्ति। तथा हि—एकारादीना सन्ध्यक्षरत्वादकारेकारात्मक एकार., अकारोकारात्मक ओकार, अकारैकारात्मक ऐकार, अकारौकारात्मक औकार। एव च संवृताकारवत एकारस्य ओकारस्य चायवौ विवृताकारवत ऐकारस्य औकारस्य चायावौ भविष्यत। तदुक्त—'संवृताकारस्य संवृताकारो विवृतावर्णस्य विवृतावर्ण' इति। ननु कथमेतद्, यतो वर्णेषु ये वर्णैकदेशास्तेषु तत्कार्यं न भवतीत्युच्यते। सन्ध्यक्षरवर्ज हि तत्, सन्ध्यक्षरेषु प्रयत्नभेद एव। तथा 'ऐऔजि'-त्यत्र भर्तृहरि — 'सन्ध्यक्षरेषु विरामोपादानाभ्या (लक्ष्य प्रयत्ना वा ?) लक्ष्यौ प्रयत्नौ द्वौ' इति। अत एव 'ए ऐ कण्ठतालव्यौ' 'ओ औ कण्ठोष्ठ्यौ' इति कालविच्छेदाभावेऽपि पृथक्प्रयत्नत्वात् 'हे गौ' इत्यत्र न सम्बुद्धिलोप॥

## अनुदात्तङित आत्मनेपदम्। १२।

कथम्—

'कर्णपुच्छ मया त्यक्त भग्नो दन्तस्तथैव च।

---

१ एवमपि प्रथमपुरुषसञ्ज्ञिन प्रङ्, डादयस्तु त्रय इति वैषम्यात् 'लुट प्रथमस्य' इत्यत्र सहचातानुदेशो न प्राप्नोतीत्याशयेनाह — एकत्वादीति सहचातानुदेशाभावेऽप्येकार्थयोस्ति सयोरेकार्थो डा, द्व्यर्थयोस्तमातामोर्द्व्यर्थो रौशब्द, त्र्यर्थयोर्झिझयोस्त्र्यर्थो रसित्येवमर्थकृतान्तर्यात् प्रयोगदर्शनेन चान्यापसाय्याव्यवस्था भविष्यतीत्यर्थ एतच्च डारौरसश्च डारौरसश्च डारौरस इत्येकशेषानाश्रयणे द्रष्टव्यम् २ रदाभ्याम् (८-४२) इत्यत्रेति शेष ३ संवृतत्वञ्च प्रायोगिक बोद्धव्यम् ४ प्रकृतभाष्य इति शेष ५ प्रयत्नभेद एवेति उपलभ्यत इति शेष तथा च तन्निष्ठावौ सन्ध्यक्षरभागौ वर्णग्रहणेन सुग्रहाविति न्याय्य तयोर्भेदेनकार्यमिति भाव ६ पूर्वभागविषयस्य प्रयत्नस्य विरामादुत्तरभागविषयस्यारम्भाच्चेत्यर्थ ■ अत एव अवयवप्रयत्नभेदादेव ८ पृथक्प्रयत्नत्वादिति अवयविन ओकारस्याकारसंवृतत्वादौकारस्य तु सर्वथा विवृतत्वादिति भाव अथैव विभाव्यते—अकारस्य संवृतत्व नाम प्रयोगभावि तद्वा दमान्तरतम्ये व्यवस्थापकमस्तु सवर्णसञ्ज्ञाया तु प्राक्रियिकस्य विवृतत्वस्यैव ताद्रूप्यव्यवस्थापकत्व युक्तम् अत एव 'अग्ने एति' इत्यादौ एकारावयवस्याकारस्य तुल्यप्रयत्नतया सावर्ण्यात् अङ्ग्रहणेन ग्रहणाद् 'एङ पदान्तात्' (६-१-१०९) इति पूर्वरूप स्यादिति तत्परिहाराय (सन्ध्यक्षरेषु) यदवर्ण, विवृततर तदन्यस्मादवर्णाद्' इत्यभ्युपगतम् ऐऔच्सूत्रे भाष्य, अन्यथा हि 'यदत्रावर्ण, तत् विवृतम्' इति प्रयत्नभेद एवावक्ष्यत. इति, तदा स्वराणामूष्मणां चैव विवृत करणं स्मृतम्। ताभ्यामेओ विवृततरौ ताभ्यामैऔ विवृततमौ॥' इति शिक्षानुसारेण प्रयत्नभेदमाश्रित्य एङैचोरादौकारस्य मिथ सावर्ण्यं काम वार्यताम्.

'एष कालः समुत्पन्नो यः पलाति स जीवति ।'

इति । पलायत इति स्यात् । उच्यते । 'पल गतौ' इत्यस्य लेटि आडागमे रूपम् । छान्दसा अपि भाषायां क्वचित् प्रयुज्यन्ते । अध्वर्युशब्देन क्याच्छन्दसि (३-२-१७०) इत्युप्रत्ययान्तेन ज्ञापितम् । अथवा 'अय गतौ' इत्यस्मादात्मनेपदानित्यत्वात् तिपि दिवादौ 'ध्या चिन्तायामि'ति कर्त्तव्ये भूवादौ 'ध्यै चिन्तायामि'ति ज्ञापकात् गणकार्यानित्यत्वाच्छपोऽभावे रूपं 'लोपो व्योर्वलि' (६-१-६६) इति यलोपे पलातीति । कथमुच्चुकुटिषतीति । कुटादित्वेन सनो ङित्वात् तद्प्रसङ्गात् । उच्यते । उपदेशाधिकारादिति गाङ्कुटादौ न्यासः । कथं तर्हि बोभूयते '' 'तपसः परस्मैपदं च' इति ज्ञापकात् सनाद्यन्तानामप्युपदेशोऽस्ति'' इति ज्ञापकसमुच्चयः । स चायुक्तः 'भावकर्मणो.' (१-३-१३) इत्यात्मनेपदनिवृत्त्यर्थत्वात् । ततश्च 'पुच्छभाण्डचीवराण्णिङ्' (३-१-२०) इति ज्ञापकम् । कथं 'शिञ्जवलयसुभगैः' इति मेघः । उच्यते । चक्षिङो युजर्थमात्मनेपदार्थं चेकारानुबन्धे कर्त्तव्ये ह्यनुबन्धत्वं ज्ञापयति अनुदात्तङित आत्मनेपदमनित्यमिति । एवं च—

'काशे स्यन्द कुशे स्यन्द स्यन्द त्व शत्रुमस्तके ।
अस्माकं तु तथा स्यन्द यथा स्यन्दसि (पेणव?) ॥'

तथा—'नीचं समृद्धमपि सेवति नीच एव दूरेण तं परिहरन्ति पुनर्महान्तः' 'अनुक्तमप्यूहति पण्डितो जनः' 'लभन्ति पुनरुत्थानम्' 'तवोपशायिका यावद्राक्षस्यश्चेतयन्ति न' 'त्राहि मामुरुदुःखितम्' । 'त्राहि मा हि तथागतम्' । त्राहीत्यत्रेदमपि वाच्यम् । त्रायत इति त्रा । 'अन्येभ्योऽपि दृश्यत' (३-२-७५) इति विचि आचारे क्विपि धातुत्वे लोटि रूपम् । मां त्राहि त्रातेवाचरेत्यर्थ । तथा 'मण्डपे शयामि किमतः पर'मिति; 'गणकार्यमनित्यम्' इति 'गणकार्यानित्यत्वाच्छपोऽलुग्' भवेत् । 'आदध्यादन्धकारे रतिमतिशयिनीमावहन्वीक्षणानाम्' इति मयूरः । उच्यते—धा

१. 'अध्वर्युक्रतु' (२-४-४) इति सूत्रे, 'अध्वर्युशाला' इति भाष्ये च प्रयुक्तेनेति शेषः. २. तेन 'मदनपारेपन्थिप्रणयिनी'त्यादयः प्रयोगाः. ३. युजर्थमिति. न च ल्युनैव विचक्षणसिद्धिः, तस्मिन् मध्योदात्तत्व, युचि त्वन्तोदात्तत्वमिति व्यतिरेकात्. ४. इकारानुबन्धे इति. अनुदात्ते इति शेषः. ५. अनुदात्तेत्यादि. अनुदात्तेत्वलक्षण ङित्वलक्षण चात्मनेपदमनित्यमित्यर्थः. ६. यथा त्राहीति प्रयोगो ङित्त्वगणस्यानित्यत्वे न फलमन्यथासिद्धत्वात्, एव शयामीति प्रयोगोऽपि न फलमनेकसंस्कारविकलतयापशब्दत्वादित्यभिप्राय मनसिकृत्य तामेवानेकसंस्कारविकलता समर्थयन्सत्वराद् दर्शयति—तथेत्यादि.

धारण इत्यस्य धातोर्नायं प्रयोगः; किन्तु 'दध धारणे' इत्यस्याशिष्यार्धधातुकत्वे। औदधातीत्यादधः। ततश्चाचारकिबन्तादाशिषि लिङचकारलोपे यासुटि रूपम्। तथा 'सर्वमापोमयञ्जगद्' इति चन्द्रिकायां 'सर्वं जगदापोऽमयन्निति विलोक्य' इति व्याचक्षाणा 'अय वय पय मय तय णय गतौ' इत्यस्माल्लङि रूपमाहुः। अत्र नकारस्य श्रुत्वेन अकारः। अन्ये त्वपूच्छब्दं सकारान्तमाहुः यस्यायं वैदिकप्रयोगः — 'आपोभिर्मार्जनं कृत्वा' इति। तथा च कोशः — ('कमलं सलिलं भुवनमुदकं धावकनीरकबन्धं। धवनवारिजीवनाः सुजले श्रुयते कतमेऽपि नपुंसकमापः?)' इति। व्याख्यानान्तरं बहुत्वान्नोक्तम्। तथा — 'प्रत्यूषकाले जगदङ्गनानां मुखेषु कामः प्रतिजृम्भति' इति। 'माता शत्रुः पिता वैरी येन बाल्ये न पाठितः। न शोभति सभामध्ये हंसमध्ये बको यथा॥' 'अरिं मित्रमुदासीनं मध्यस्थं स्थविरं गुरुम्। यो न बुध्यति मूढात्मा सर्वथासौ विनश्यति॥' इति। तथा 'परिष्वजति पाञ्चाली मध्यमं पाण्डुनन्दनम्' इत्यादि। 'स सहेत्र कथं(नं?) तुषारम्' इत्याधृषीयस्य सहेः। तथा — 'ग्रसति तव मुखेन्दुं चन्द्रबिम्बं विहाय।' 'पिण्डं ग्रसतीति पिण्डग्रः' इति 'अत्वसन्तस्य' (६-४-१४) इत्यत्र वृत्तौ। 'ग्रसु ग्रहणे' इत्याधृषीयस्य रूपमिति रक्षितः॥

## कर्त्तरि कर्मव्यतीहारे। १४।

कथं 'सम्पद्विनिमयेनोभौ दधतुर्भुवनद्वयम्' इति रघुः। उच्यते। 'प्रतिषेधे हसादीनामुपसंख्यानम्' इति रक्षितः। अत्रादिशब्दः प्रकारे सादृश्ये (च?)। तच्चप्रासात्मनेपदाभावत्वेन न तु शब्दक्रियत्वेन। एवं च यदुक्तं भागवृत्तिकृता — 'प्रकारस्तु शब्दक्रियत्वाद्' इति, तन्न। विनिमयशब्देन कर्मव्यतीहारस्योक्तत्वादिति तु न वाच्यम्, 'इतरेतरान्योन्योपपदाच्च' इति वचनात्। अपशब्द एवायमित्यनुन्यासः। '"ततः सम्प्रहरिष्यन्तौ दृष्ट्वा कर्णधनञ्जयौ' इति कर्मव्यतीहारो न विवक्षितः, किं तर्हि युध्यमानाविति" इति कैयटः॥

१. नायमिति. अपेक्षिताया आशिषः सार्वधातुकलिङानवगमादिति भावः. २. अस्येति. आत्मनेपदं तु नानित्यत्वात्. ३. आद्धातीत्यादः सामासिकसम्बन्धमात्राभिप्राय, 'ददातिदधात्योर्विभाषा' (३-१-१३९) इत्यनुपसर्गादेव शविधानात्. ४. विलोक्येति पदं श्लोकस्थम्. ५. नन्दिन्नुरादौ मृग्यः. ६. आत्मनेपदपाठ एव तु पदमञ्जर्यामुपलब्ध इति प्रतिभाति. ७. प्रणिगाद्यर्थीयेषु मृग्यः. ८. 'न गतिहिंसार्थेभ्यः' (१-३-१५) इति प्रतिषेधे. ९. ततश्च इतरेतरान्योन्यपरस्परातिरिक्तशब्देन कर्मव्यतीहारस्योक्तत्वेऽपि विधिप्रवृत्तेरावश्यकत्वादित्यर्थः.

## नेर्विशः । १७ ।

कथं 'अङ्के निविशती भयाद्' इति रघुः । नेरुपसर्गस्य ग्रहणमम्भूनि विशन्तीति व्यावृत्त्यर्थम् । इह तु उपसर्गप्रतिरूपको निपातः । पदसंस्काराश्रयणाद्वा ॥

## आङो दोऽनास्यविहरणे । २० ।

कथं 'किं वा दत्से विहग! पतनम्' । उच्यते । कर्त्रभिप्राये भविष्यति । एवञ्च 'प्रजासु वृत्तिं यमयुङ्क्त वेदितुम्' इति भारविः । 'युजेरयज्ञपात्रेषु (१-३-६४) इति स्वराद्यन्तोपसृष्टादिति वक्तव्यम्' इत्युभयानियमात् केवलात् तङोऽभावात् ॥

## क्रीडोऽनुसम्परिभ्यश्च । २१ ।

कथं 'सलक्ष्या यष्टिभागम्वनवनसहितः क्रीडते नागराजः' इति शुद्धसुधन्ते । उच्यते । अपशब्द एवायम् । क्रीडति इति पाठो वा । वार्त्तिकसमुच्चयार्थचकाराद्वा ॥

## शप उपालम्भन इति वक्तव्यम् ।

कथं 'सख्यः शपामि यदि किञ्चिदपि स्मरामि' । उच्यते । चकारसंगृहीतस्यास्य 'नपुंसकमनपुंसकेन' (१-२-६९) इत्यतोऽन्यतरस्यांग्रहणानुवृत्तेर्व्यवस्थितविभाषात्वेनानित्यत्वाद्वा । वाचा शरीरस्य स्पर्शनायोगाद्वा । भागवृत्तौ (तूपलम्भनमकारमुक्तम् ?) तूपालम्भनं प्रकाशनमुक्तम् । एवञ्च पूर्वक एव सिद्धान्तः ॥

## आशिषि नाथः ।

कथं 'नाथसे किमु पतिं न भूभृताम्' इति भारविः । उच्यते । 'आशि-

---

१. उपसर्गग्रहणमर्थवद्ग्रहणन्यायलभ्य, न तु वाचनिकमित्यरुचेराह — पदसंस्काराश्रयणाद्वेति. यदि निपातोऽप्यनर्थकः, तदा पूर्वकमपि समाधान साधु. २. कर्त्रिति. 'स्वरितञितः (१-३-७२) इत्यनेनेति शेषः. प्रकृतसूत्र ह्युपसृष्टादकर्त्रभिप्रायेऽपि विध्यर्थम्. ३. भारविरिति. उपपद्यत इति शेषः. ४. वार्तिकेनि. चकारः 'गमोऽकूजने' इत्याद्यनुक्त समुच्चिन्वन्ननुपसृष्टमपि समुच्चेष्यति. आङ् च कथञ्चित् स्वरितत्वादनुवर्तिष्यते इति भावः. ५. वाचेत्यादि. 'वाचा शरीरस्पर्शनमुपालम्भनम्' इति हि काशिका. ६. एवञ्चेति. उपलम्भन इति पाठस्यैव प्रामाणिकतया प्रकाशनस्य तदर्थत्वान् मतो. अत्र स्मरणाभावप्रकाशनस्येह स्फुटत्वात् तङो दुर्वारत्वे सतीत्यर्थः.

प्येव नाथ इति नियमार्थं नेदं; किं तर्हि, अनुदात्तेत्त्वलक्षणात्मनेपदानित्यत्वान्नित्यात्मनेपदार्थम् । तेनाशीर्विषयादन्यत्र विकल्पं ज्ञापयति', इति केचित् । नाधस इति वा पाठः कर्तव्यः । एवं 'नाथ! त्वामनुनाथे विजहिहि संरम्भम्' इत्यपि । अथ वा सङ्गरसंरम्भं त्यजेति त्वामाशंस इत्यर्थः ॥

## हरतेर्गतिताच्छील्य इति वक्तव्यम् ।

कथं 'जलधिमनुहरते सरः' । उच्यते । 'गतताच्छील्ये' इति तु भागवृत्तिः । 'गतविधमकारास्तुल्यार्थाः' इति भर्तृहरिः । तेन सादृश्यशीलने तङ् । वृत्तिकारमतेन तु कर्त्रभिप्राये भविष्यति ॥

## उदोऽनूर्ध्वकर्मणि । २४ ।

कथम् 'उत्तिष्ठते वासुकिनापि दष्टः' इति माणेश्वरः । उच्यते । नात्रोर्ध्वगमनं, किन्तर्हि, बोधनमर्थः ॥

## आङो यमहनः । २८ ।

कथम् 'आजघ्ने विषमविलोचनस्य वक्षः' इति भारविः, अकर्मकादित्यनुवृत्तेः । उच्यते । वक्षसेत्यध्याहार्यम् । अयमर्थः — विषमविलोचनस्य वक्षसा स्वं वक्ष आजघ्ने । वाणनयाः प्रतिमुखं यथा स्यात् तथा भुजाभ्यामुपेत्य । अथवा विषमविलोचनस्य भुजाभ्यां स्वं वक्ष आजघ्ने । अथवा विषमविलोचनस्येति सामीप्ये षष्ठी । स्वं वक्ष आजघ्ने आस्फोटितवान् । यद्वा प्रतिमुखमिति विभक्त्यर्थेऽव्ययीभावः । विषमविलोचनस्य वक्ष एत्य आजघ्ने । प्रकृतत्वाद्वक्ष एव । एवं चाङो यमहन इति तङ् । पूर्वव्याख्यायामकर्मकाच्चेत्यनेनात्मनेपदमिति भागवृत्तिः ॥

## समो गम्यृच्छिप्रच्छिस्वरत्यर्तिश्रुविदिभ्यः । २९ ।

कथं 'तथैवच समगच्छते'ति तङ् अकर्मकादित्यनुवृत्तेः । उच्यते । ऐक्यमिति चातुर्वर्ण्यादित्वात् स्वार्थे ष्यञ् । ततश्च एकं समगच्छत समपद्यतेत्यर्थः । [3]आगमत्वादिष्वन्वयः । नेयं [4]स्मृतिर्भगवद्व्यासप्रभृतीनधिकृत्य कृता । ते हि

1. पश्चिदिदि. नार्थनिर्देश[illegible]नान्याम[illegible]नुवादेयतामुपार्थस्य द्योतयति, यथो[illegible] नाम [illegible] [illegible] प्रभृत[illegible], न पुनर्विष्टोऽपीति 'गार्गेयो नायते' इत्यादा[illegible] [illegible] एव [illegible]. 2. वृत्तिकारो[illegible]. यथा [illegible] स्यात् — '[illegible] [illegible]' इ[illegible], [illegible] इ[illegible] न [illegible] वृत्ति[illegible].
3. आगमन्तादि[illegible] [illegible]. 4. स्मृतिरि[illegible]. व्याकरण[illegible].

भगवन्तो वाग्विषये स्वतन्त्राः' इत्यनुन्यासः[1]। कथं 'नासम्पपृच्छे गमनाय सत्वरा सखीजनं सन्ददृशे तथापरा' इति घोषः, तथा 'रक्षांसीति पुरापि संशृणुमहे' इति मुरारिः, अकर्मकादित्यनुवृत्तेः। उच्यते। कर्मव्यतीहारे तङत्र। (अन्योन्यप्रश्नसन्दर्शनं संश्रवणपूर्वकमुच्यते?)[2] 'सखीजनादि'ति वा पाठः, ल्यब्लोपे पञ्चमी, सखीजनं प्राप्येत्यर्थः॥

## सम्माननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः। ३६।

कथं 'विनिन्युरेनं गुरवो गुरुप्रियम्' इति रघुः। उच्यते। आचार्यकरणस्याविवक्षितत्वात्। 'तदाद्याचिख्यासायाम्' (२-४-२१) इति च सना ज्ञापितं[3]—विवक्षा हि शब्दव्युत्पत्तेः प्रधानं कारणं, न वस्तुतः सत्ता॥

## कर्तृस्थे चाशरीरे कर्मणि। ३७।

कथं 'विगणय्य नयन्ति पौरुषं विजितक्रोधतया मनीषिणः' इति भारविः। वेरित्यनुवर्तते[4]। तेन न तङिति रक्षितः। (एवं च क्षपनयमनीनमानम्?)॥

## आङ उद्गमने। ४०।

उद्गमने प्रधाने गुणभूते च तङ्, ज्योतिरुद्गमनस्य 'आक्रामति धूमो हर्म्यतलम्' इति भाष्ये प्रत्युदाहरणात्। अत्र ह्युद्गमनपूर्विकायां व्याप्तौ क्रमिः। उद्गमनमात्रे 'आक्रमत आदित्यः'। उद्गमनपूर्विकायां व्याप्तौ 'दिवमाक्रममाणेव केतुतारा'भयप्रदे'ति महिः। यद्येवं कथं 'नभः समाक्रामति नष्टवर्त्मना स्थिरैकचक्रेण रथेन भास्करः' इति। उच्यते। अपशब्द एवायमिति भागवृत्तिः। श्रीसर्वरक्षितस्त्वाह—"व्याप्तिमात्रवचनोऽत्र क्रमिः। उद्गमस्तु गम्यमानोऽपि न विवक्षितः। विवक्षा हि शब्दव्युत्पत्तेः प्रधानं कारणं न वस्तुतस्सत्ता। तदाद्याचिख्यासायामित्यत्र सन्प्रयोगेण ज्ञापितम्"॥

---

१. मुरारिप्रयोगे इति कथयन्त्यः इत्यध्याहारमाहुरपरे. २ 'अन्योन्यप्रश्नदर्शनश्रवणानि सम्पूर्वकैरुच्यन्ते' इति पाठ. स्यात्. ३. ज्ञापितमिति 'तदाद्याख्याने' इति वा, 'तदादौ' इति वा करणेऽपि तदादित्वाभावे कार्यं न भविष्यतीत्यतिरिच्यमानम् आचिख्यासाग्रहण यत्र तदादित्व वस्तुतोऽस्ति न च प्रयोक्त्राख्यानुमिष्यते, तत्र मा भूदित्येतदर्थम्. तेन वस्तुसतोऽप्यर्थस्य विवक्षाया सत्यां कार्यप्रवृत्तिर्नाविवक्षायामिति सामान्यतोऽनुमीयते इत्यर्थः. ४. 'वेः शब्दकर्मणः' (१-३-३४) इत्यत इति शेषः.

## प्रोपाभ्यां समर्थाभ्याम्। ४२।

कथं 'ते तां हन्तुं प्रचक्रमु'रिति चण्डी। उच्यते। 'पूर्वं धातुः साधनेन युज्यते, पश्चादुपसर्गेण'॥

## अनुपसर्गाद्वा। ४३।

कथं 'वारिपूर्णां महीं कृत्वा पश्चात् सङ्क्रमते गुरुः'। तथा 'अर्धरात्रे कलाहीने यदा सङ्क्रमते रविः'। उच्यते। उपसर्गप्रतिरूपकत्वाद् 'अनुपसर्गाद्वा' इति तङ्। यच्च 'क्रीडोऽनुसम्परिभ्यश्च' (१-३-२१) इत्यत्रोक्तं — 'समा साहचर्यादनुपरी उपसर्गौ गृह्येते' इति, तत् कर्मप्रवचनीयव्यावृत्तिपरं समोऽकर्मप्रवचनीयत्वात्। उपसर्गप्रतिरूपकन्तु परिणा साहचर्यात्। 'अकर्मकाच्च' (१-३-३९) इति चकारानुवृत्तेर(मत्या)भावादनुपसर्गान्तरे तङ्। (सङ्क्रमत इति वा पाठे सिद्धासिद्धौ गुरुरित्यर्थः?)॥

## अकर्मकाच्च। ४५।

कथं 'सम्भविष्याव एकस्यामभिजानासि मातरि' इति भट्टिः, 'अभिजानासि देवदत्त! कश्मीरेषु वत्स्यावः' इति जानातेरकर्मकत्वादनेन तङ्प्रसङ्गात्। उच्यते। 'व्यवस्थितविभाषाविज्ञानात्, ज्ञानोपसर्जनवृत्त्या जानातेरज्ञानार्थत्वात्, तस्य भाष्यकारवचनाद्वा 'अभिजानामीति' इत्युक्तवान् भागवृत्तिः। 'वाक्यार्थस्य कर्मणो विवक्षितत्वाद्' इति रक्षितः। एवं च 'जाने कोपपराङ्मुखी प्रियतमा स्वप्नेऽद्य दृष्टा मया' इत्यत्र तङ् न स्यात्। 'अनुपसर्गाद् ज्ञः' (१-३-७६) इति कर्त्रभिप्राये तङ्॥

## उपाद्यमः स्वकरणे। ५६।

कथम् 'उपायंस्त महास्त्राणि' तथा 'उपायंसत नासवं' 'शस्त्राण्युपायंसत जित्वराणि' 'नोपायध्वं भयं सीताम्' इति भट्टिः। स्वकरणं पाणिग्रहणमिति व्याख्यानात्। उच्यते। 'क(र्तरी?)र्तृस्थ इत्यनुवृत्तेः स्वकरणमात्यन्तिकस्वीकारः' इति रक्षित(:?) भागवृ(त्तिः?)त्ती। 'उपाङ्पूर्वोऽत्र यमिरि'ति जयमङ्गला। ततश्च 'समुदाङ्भ्यो यमोऽग्रन्थे' (१-३-७५) इति तङित्यन्यः॥

---

१. 'अन्वादिरुपसर्गो गृह्यते' इति पाठो दृश्यते काशिकायाम्. २. स हि ज्ञानार्थः, ज्ञानं यः प्राधान्येनाभिधत्ते. ३. लक्षणया भागवृत्तिकार इत्यर्थः. ४. एवञ्चेति. वाक्यार्थकर्मतायां च.

## ..यतेर्लुङ्लिङोश्च । ६१ ।

कथं 'मन्त्रे पतङ्गवद्वीरै'रिति भट्टिः । उच्यते । 'क(र्तरी?)र्तृ'त्य इत्यनुवृत्तेः कर्तरीति नियमाद्भावे तङि'ति राक्षितः ॥

## प्रोपाभ्यां युजेरयज्ञपात्रेषु । ६४ ।

कथं 'प्रजासु वृत्तिं यमयुङ्क्त वेदितु'मिति भारविः । उपसर्गयोगाभावात् । उच्यते । कर्त्रभिप्राये ॥

## भुजोऽनवने । ६६ ।

कथं 'दिवं मरुत्वानिव भोक्ष्यते महीम्' । तथा 'बुभुजे पृथिवीपालः पृथिवीमेव केवलाम्' इति रघुः । तथा 'बुभुजाते चिरं महीम्' इति कामन्दकीयः । पालने 'अनवने' इति प्रतिषेधात् । उच्यते । '"भुजो भक्षे' इति कर्तव्ये अनवग्रहणादुपभोगवृत्तावपि तङ्" इति राक्षित' । पुरुषोत्तमदेवश्च — 'उपभोगोऽत्र गौणार्थः । आत्मसात्करणं वा अनवनम्' । एवं च 'वृद्धो जनो दुःखशतानि भुङ्क्ते' इत्यपि । चान्द्रास्तु भुजो भक्ष इत्येवमाहुः । तेषां चिन्त्यम् ॥

## अनुपसर्गाज्ज्ञः । ७६ ।

कथम् 'इत्थं नृपः पूर्वमवालुलोचे ततोऽनुजज्ञे गमनं सुतस्य' इति भट्टिः । उच्यते । नृपेणेति विपरिणामेन कर्मण्यात्मनेपदमिति जयमङ्गला ॥

## शेषात् कर्तरि परस्मैपदम् । ७८ ।

कथम् 'इदं गुरुभ्यः पूर्वेभ्यो नमोवाकं प्रशास्महे' इति भवभूतिः । शासेः परस्मैपदित्वात् । उच्यते । 'आङः शासु इच्छायामि'त्यस्य शास आङः प्रयोगः प्रायेणेति लक्ष्यते । कथं 'स विष्ठायां कृमिर्भूत्वा पितृभिः सह पच्यते' । उच्यते । कर्मकर्तरि तङ् । कथं 'दासत्वं गच्छते भार्या वृद्धस्तु पुरुषोत्तमः' । तथा 'नालानं कारिणां ससे' । इति रघुः कर्मव्यतीहारे 'न गतिहिंसार्थेभ्यः' (१-३-१५)

---

१. 'आङो दः' (१-३-२०) इत्यत्र तु प्रसङ्गादेतदुक्तम्. २. गौणार्थ इति. स च पदेन तदन्तेन प्रतीयते, यथा गौरिति मुख्यार्थेन वाहीकः. तद् लदने मुख्यार्थे पूर्वमेव जात इति भावः. उपपत्तिवैचित्र्यमात्रमेतत्; भुजेरेव ह्युपभोगो मुख्यार्थो भवति उपसर्गस्य द्योतकत्वात्. आत्मसात्करणमिति. रक्षणीय निक्षेपादिकमात्मसात् कुर्वन् हि तस्यारक्षक उच्यते.
३. महीशब्दस्य महीजन्यभोज्यलक्षणयाप्युपपद्यते पूर्वः प्रयोगः, न त्वपरमिति विशेषः.

इति निषेधात् । उच्यते । नालानैरिति पाठः कर्तव्यः । कर्मकर्तरि चायं तङिति टीका । गच्छत इति चिन्त्यमिदम् । कथं 'मुच्यते सर्वपापेभ्यो विष्णुलोकं स गच्छति' इति; कर्मणि तङि पापैरिति स्यात् । उच्यते । कर्मवद्भावे कर्तरि यगात्मनेपदम् । अन्तर्भावितण्यर्थो वा मुचिः । पापेभ्यो मुच्यते त्याज्यत इत्यर्थः । कथं 'रजसा शुध्यते नारी' इति तङ् । उच्यते । शुद्धशब्दात् 'तत्करोति' इति णिच्; कर्मणि तङ् । कथं 'कदाचित् कुप्यते माता नोदरस्था हरीतकी' इति । उच्यते । कर्तरि क्विबन्तात् क्यङ् । कथं 'प्रियामुखं किम्पुरुषश्चुचुम्बे' इति कुमारः । उच्यते । कर्मव्यतीहारे । 'अन्योन्यचुम्बनमिति कर्मव्यतीहारः' इत्यनुन्यासः । कथम् 'अन्वेषमाणं मुहुः' इति कादम्बरी । तथा 'प्रेषे तत्क्षणमास्यानाम्' इति चाणक्यः । तथा अध्येषामह इति विध्याविसूत्रे वृत्तिः । उच्यते । एतच्च ईष गतावित्यस्य रूपम् । कथं 'नन्दते च कुलं पुंसां', तथा 'ततः स ददृशे च तौ' (मधुकैटभौ), तथा 'तच्छृणुष्व मयाख्यातं यथावत् कथयामि ते' उच्यते । आगमत्वादित्युक्तमेव । कर्मकर्तरि वा रूपाणि । कथं 'स्वराज्यं प्राप्स्यते भवान्' इति । उच्यते । आगमत्वादिति । कथं 'वलमानो(वलिनो?) नीलः' 'ज्वलमानोऽनलः' । ताच्छील्ये चानश् । कथं 'प्रसज्यते भूः' 'पञ्ज-गतौ' इत्यस्य परस्मैपदित्वात् । उच्यते । 'प्रसज्यत इति भाष्यकारवचनाद्' इति धातुप्रदीपः ॥

## बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः । ८६ ।

कथं 'पातालहंसाः पटुभिर्निनादैः प्रबोधयन्ते नृप! नागकन्याः' इति, अनेन परस्मैपदित्वात् । 'णेरणौ' (१-३ ६७) इत्यादिना तङ् । अयमर्थः—नागकन्यका हंसान् प्रबोधयन्ति हंसास्ताः प्रबोधयन्ते । एवं 'करेणुरारोहयते निषादिन'मिति माघः । 'स सन्ततं दर्शयते गतस्मयः' इति भारविः ॥

## निगरणचलनार्थेभ्यश्च । ८७ ।

१. अध्येषामह इति. हरदत्तस्तु 'अध्येष्यामहे' इत्येव पाठमुपलभ्य दूषयन् 'अधीष्याम.' इति पाठ स्थापितवान्. २. 'ईष गतिहिंसादर्शनेषु' इति भ्वादिपठितस्यात्मनेपदिन इत्यर्थः. ३. कर्मकर्तरीति. एवमपि यगभावाय 'आतिदेशिकं कार्यमनित्यम्' इत्याश्रयणीयमिति नाय इव परिहारः. ४. लोलमान इति पाठः स्यात्. ५. 'लोलमानादयश्चानशि' इति काव्यालङ्कारे वामनः. ६. 'षञ्ज सङ्गे' इति धातुपाठे दृश्यते.

कथं 'शिरः कम्पयते युवा' । अनेन परस्मैपदित्वात् । उच्यते । चिन्त्यमिति भागवृत्तिः । 'शिरः कम्प्ययते' इति वा पाठः कर्तव्यः । शिरःकम्पी अयते गच्छतीत्यर्थः । अय गतावित्यस्य रूपम् ॥

इति शरणदेवविरचितदुर्घटवृत्तौ
प्रथमाध्याये तृतीयः पादः ।

---

अथ चतुर्थः पादः

## आ कडारादेका संज्ञा । १

## यूस्त्र्याख्यौ नदी । ३ ।

कथम् अतिलक्ष्म्यै ब्राह्मणाय । उच्यते । अवयवाश्रितनदीत्वात् सिद्धिरिति रक्षितः । कथं तर्हि नित्यं सुमतये प्रियविप्राय । उच्यते । "ह्रस्वयोरियङुवङ्स्थानयोश्च 'ङिति ह्रस्वश्च' (१-४-६) इति स्त्रीवचन एव पाक्षिकी नदीसंज्ञेष्यते । न चावयवाश्रयेति स्मृतिः" इति भाषावृत्तिः । (एवं मंथुश्रयशारीति रत्नश्रीप्रयोगः !) । कालदृष्टोऽयमपशब्दोऽवयवाश्रयनदीत्वाभावादिति ॥

## नेयङुवङ्स्थानावस्त्री । ४ ।

कथं 'हा पितः क्वासि हे सुभ्रु' इति भट्टिः । 'विमानना सुभ्रु ! कुतः पितुर्गृहे' इति कुमारः । अनेन नदीत्वप्रतिषेधाद्ध्रस्वाभावात् । उच्यते । 'अप्राणिजातेश्चारज्ज्वादीनाम्' इत्यूङि समासे उपसर्जनह्रस्वत्वे कृते 'ऊङुतः' (४-१-६६) इत्यूङि तस्य समुदायभक्तत्वादत्र नोवङ्स्थानत्वमिति सम्बुद्धिह्रस्व इति भट्टिटीका । 'वामि' (१-४-९) इत्यतो वाग्रहणमपकृष्य व्यवस्थिताविभाषात्वाद् इति श्रीकण्ठः । 'वर्षाभ्वे' इत्यत्र तु स्थानग्रहणादपवादविषयत्वान्नदीत्वनिषेधविकल्पयोः प्रतिक्षेपान्नित्यं नदीत्वनिबन्धन आट् ॥

---

१. अवयवेति. ईदूतोस्तु अनियङुवङ्स्थानयोरवयवाश्रयनदीत्वपरिग्रहे स्मृतिरिति 'प्रथमलिङ्गग्रहणं च' इति २. व्यवस्थितविभाषात्वादिति. एतच्च दर्शितं मनोरमायाम्—"तथा सतीह नञ्ग्रहणस्य वामीत्युत्तरसूत्रस्य च वैयर्थ्यापत्तेः" इति ३. स्थानग्रहणादिति. तद्धि यस्मिन्नङ्गे कश्चिदियङुवङोरभिनिर्वृत्तिर्न तु प्रसक्तमात्रयोरपवादेन बाधः, तत्रैव निषेधो यथा स्यादित्येवमर्थम्. ४. अपवादेति. 'वर्षाभ्वश्च' (६-४-८४) इति यणित्यर्थः.

## शेषो घ्यसखि । ७ ।

कथं 'सखिना वानरेन्द्रेण' । उच्यते । 'अलवणा यवागूरि'तिवदल्पार्थे नञो विधानाद्[1]' इत्यनुन्यासः । कथम्[2] 'अतिसखेरागच्छति' । 'असखी'ति प्रथमानिर्देशादिवर्णोवर्णान्तस्य घित्वम् । प्रतिषेधश्च सखिशब्दस्यैव, न वर्णमात्रस्य । तदन्तविधिना[3] प्राप्नोतीति चेन्न । तत्र 'ग्रहणवता प्रातिपदिकेन न तदन्तविधिरस्ती'ति केवलस्यैव निषेधो न तदन्तस्य । यद्येवं कथं 'बहुसख्या कृतम्' । 'बहुसख्युरि'ति[4] । उच्यते । "'असखी'ति व्यत्ययेन षष्ठ्यर्थे प्रथमेति वर्णमात्रस्य घित्वम् । प्रतिषेधोऽपि तस्यैव । तथा च 'द्वन्द्वे घी'त्यत्र घ्यन्तं पूर्वं निपततीत्युच्यते' इति वृत्तिः[5] । एवञ्च सखिशब्दावयवस्येकारस्य घित्वप्रतिषेधात् बहुसख्या बहुसख्युः" इति भाष्यानुगतो[6] रक्षितः ॥

## पतिः समास एव । ८ ।

कथं 'पतिना नीयमानायाः पुरः शुक्रो न दुष्यति', तथा 'गते मृते प्रव्रजिते क्लीबे च पतिते पतौ', तथा 'पतौ जीवति या नारी उपोष्य व्रतचारिणी । आयुष्यं हरते भर्तुः सा नारी नरकं व्रजेत्' । उच्यते । 'शेषो घ्यसखिपती' इति वैकल्ये[7] पृथक्करणं अनित्यत्वज्ञापनार्थम् । जीवपत्यामिति तु शेषग्रहणानुवृत्तेः 'ङिति ह्रस्वश्च' (१ ४-६) इति नदीत्वादिति रक्षितः (पतौ । उच्यते । समासे कृते विभाषा स्वसृपत्योरित्यलुग्विधानात् ?)

## संयोगे गुरु । ११ ।

कथम्

'अहृत धनेश्वरस्य युधि यस्समेतमायो धनं
तमहमितो विलोक्य विबुधैः कृतोत्तमायोधनम् ।

१. तेन क्वचिद् घित्वसिद्धिः. २. कथमिति वर्णयोरेव घित्वात् सखिशब्दसम्बन्धिनश्चेकारस्य तत्प्रतिषेधात् प्रश्नः ३. तदन्तविधिनेति. स च शब्दस्वरूपाध्याहारेण कथञ्चिद् बोध्यः ४. बहुसख्युरितीति अनाप्यतिसखिशब्दवद्, घित्वस्य न्याय्यत्वादिति शेषः. ५. वृत्तिरिति. सा च भागवृत्तिर्भाषावृत्तिर्वा स्यात्. ६. भाष्यानुगत इति. एतेन वर्णसंज्ञापक्षे आदर सूचयति ७. वक्तव्य इति. एवञ्च वदता पतिशब्दस्य समासे घित्व 'गृहपतिना' (४-४-९०) इति निर्देशाज्ज्ञात् साधनीय स्यात्. ८. अनित्यत्वेति. तथा च प्रतिपदोक्तपतिशब्देनैवोक्तप्रयोगसिद्धिः. पतिशब्दात् तत्करोतिण्यन्ताद् इप्रत्ययेनौणादिकेन पतिरित्याख्यातः पतिरिति लाक्षणिकपतिशब्दोत्प्रेक्षायां तु णिजर्थानुपयोगः.

विभवमदेन निह्नुतह्रियातिमात्रसंपन्नकं
व्यथयति सत्पथादधिगताथवेह सम्पन्न कम्' ॥

इति दशमसर्गे भट्टिः । तृतीयपादे ह्रिशब्दे परतो नवमस्य तशब्दस्य गुरुत्वाच्छन्दोभङ्गात् । उच्यते । निह्नुततयेति पाठः कर्तव्यः । कथं भोक्ता । प्रकृतिप्रत्ययावयवसंयोगे गुरुत्वाद्गुणाभावाद् । उच्यते । 'त्रसिगृधिधृषिक्षिपेः क्नुः' (३-२-१४०) इति क्नोः कित्त्वं धृष्णुः जिष्णुरित्यादौ गुणाभावार्थं कृतं ज्ञापयति नैवंविधगुरुत्वाद्गुणाभावः; यतो गुणप्रसङ्गे कित्त्वं गुणाभावार्थम् । न च ककारस्तत्र श्रवणार्थः नित्यशब्ददर्शनात् । व्याप्तेश्च । तदुक्तम्—

'क्नुसनोर्यत् कृतं कित्त्वं ज्ञापकं स्याल्लघोर्गुणे' ।

अपरं बहुत्वान्नोक्तम्[1] । कथं पुन' 'प्रासनाभिह्रदमज्जनमाशु प्रस्थितं निवसनग्रणाये'ति माघः ह्रदशब्दे परतो गुरुत्वाच्छन्दोभङ्गात् । उच्यते । प्रासनाभिनद इति पाठः साधुः । छन्दश्शास्त्रे 'ह्रे वा' इति सूत्रेण विकल्पेन गुरुत्वमिति काश्चित् ॥

## यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम् । १३ ।

कथं 'णु स्तवने' नु(तः?)वन्नुदादित्वाच्छप्रत्यये कृते नुवतीति । तदादिग्रहणाद्विकरणान्नस्याङ्गत्वे सार्वधातुकाश्रयगुणप्रसङ्गात् । उच्यते । अन्तरङ्गत्वादुवङ् विकरणाश्रयः ॥

## स्वादिष्वसर्वनामस्थाने । १७ ।

- कथं राजेति । असर्वनामस्थाने इति निषेधात्[2] । उच्यते । 'न ङिसम्बुद्ध्योः' (८-२-८) इति ज्ञापकात्[3] 'सुप्तिङन्तं पदम्' (१-४-१४) इति प्रतिप्रसूयते न 'स्वादिष्विति'[4] इति रक्षितः ॥

## बहुषु बहुवचनम् । २१ ।

१. 'पुगन्त' (७-३-८६) इति सूत्रभाष्ये. २. निषेधादिति प्रसज्यप्रतिषेधादित्यर्थः. पर्युदासे तु सर्वनामस्थानभिन्ने विधिरिति सर्वनामस्थाने प्रतिषेधाभावात् सिद्धं 'सुप्तिङन्तमि'ति पदत्वम्. ३. ज्ञापकादिति. 'सुप्तिङन्तमि'ति प्राप्तेर्हि व्यवहितायाः अपि प्रतिषेधे पदत्वविरहादेव नलोपो न भविष्यतीति सम्बुद्धौ नलोपनिषेधस्यानर्थक्यम्. न चासर्वनामस्थान इति प्रतिषेधाविषये हे चर्मन्निति नपुंसके सार्थक्य, 'वा नपुंसकानामिति वक्तव्यम्' इत्यस्यारम्भव्ये विकल्पवचने 'न ङिसम्बुद्ध्योरि'त्यस्य तत्रानुपयोगादित्याशयः. ४. द्वौ 'स्वादिष्वि'ति पदसंज्ञाया असम्भवादाह—न स्वादिष्वितीति. सोऽयम् 'अनन्तरस्ये'ति न्यायसिद्धोऽर्थो लिङ्गेनोपपादितो वेदितव्यः.

(अथवा?) कथं दाराः । अध्यारोपितबहुत्वाद्बहुवचनं यथा 'युष्मदस्म-सनोः' (१-३-९२) 'युष्मो लुङि' (१-३-९१) इत्यादौ । एकशेष एवेत्यन्यः ।

कथम्—

वासुदेवं परित्यज्य योऽन्यं देवमुपासते ।
तृषितो जाह्नवीतीरे कूपं खनति दुर्मतिः ॥

इति । एकत्वे उपास्त इति युक्तम् । उच्यते । 'अस गतिदीप्त्यादानेषु' इत्यस्य भौवादिकस्योभयपादिनो रूपम् । गच्छति गृह्णीत इति वार्थः । विकरणकार्यम-नित्यमिति वा शपो लुगभावे रूपम् । कथं 'येन यथा भवितव्यं न ते भवति चान्यथा' इति । उच्यते । तेवृधातोः क्विपि सम्बोधने ते इति रूपम् । तदिति वा पाठः कर्तव्यः । कथम् 'अन्धश्च पङ्गुश्च द्वौ ते वनं प्रविष्टौ' इत्यष्टधातुः । उच्यते । 'तेवृ देवृ देवने' ल्युटि च तेवनं क्रीडां प्रविष्टावित्यर्थः । अथवास्मादेव धातोः सम्पदादित्वात् क्विपि वलि लोपः । तेः क्रीडा । तदर्थं वनं क्रीडावनमित्यर्थः । [अन्धनीर्वहणमिति षष्ठीसमासः । तत् करोति पङ्गुः यतो वर्त्म दर्शयति । नयतीति नीः । 'सत्सूद्विष' (३-२-६१) इत्यादिना क्विप् । नपुंसकह्रस्वत्वम् । अन्धनी चक्षुषी यस्य सोऽन्धनो । तावचक्षुर्वाहनं करोतीत्यर्थः ?] कथं 'विलुक्षुशुभ्रूमि-पतेर्महिष्यः' इति भट्टिः, यतो महिषी कृताभिषेका । सा चैकैवोच्यते । 'जात्याख्या-यामेकस्मिन्' (१-२-५८) इति बहुवचनम् । उपचाराद्वावरोधा उच्यन्ते । कथं 'वहन्ति स्त्री धान्यमुलूखलेन' । उच्यते । अवपूर्वस्य हन्तेः 'वष्टि भागुरिरल्लोपम-मवाप्योरुपसर्गयोः' इत्यकारलोपे रूपम् । कथं 'कथं दूतेषुः कल्याणं यदि बुद्धो न तिष्ठति' । दूतेषु इत्ययुक्तं, बुद्ध इत्येकवचनात् । उच्यते । दूतः इषुरिव दूतेषुः । 'उपमित'(२-१-५६)मित्यादिना समासः । दूतेषोः कल्याणमिति षष्ठीसमासः । सुकल्याणमिति वा पाठः ॥

## ध्रुवमपायेऽपादानम् । २४ ।

कथं 'शब्दे सोऽपि वियुज्यत' इति लक्षणम् । 'अहो चित्रा प्रयोगस्थिति-रि'ति भागवृत्तिः । तथा 'प्रामाद्यद् गुणिनां हित' इति भट्टिः । 'जुगुप्साविराम-प्रमादार्थानाम्' इत्यपादानात् । उच्यते । 'एवे चानियोगे' इतिवत् प्रायिकमिदम् । एकमुनिपक्षे तु चौद्धापादानत्वेन प्रत्याख्यातम् । तच्च कचिदेव ॥

## वारणार्थानामीप्सितः । २७ ।

कथं

'यदीच्छति जगत्सर्वं वशीकर्तुमयत्नतः ।

परापवादसस्येषु चरन्ती गौर्निवार्यताम् ॥'

उच्यते । ध्रौव्येणाविवक्षितत्वात् । कथं कूपादन्धं वारयति, अग्नेर्माणवकं वारयति अनीप्सितत्वात् । उच्यते । 'अन्धस्य गतेनेप्सितः कूपः माणवकस्य ज्योतीरूपोऽर्थः स्पृहणीयत्वेनेप्सितः' इति रक्षितः ॥

## जनिकर्तुः प्रकृतिः । ३० ।

'जातं वंशे भुवनविदिते पुष्कलावर्तकानाम्' इति मेघः कथम् । उच्यते । वंश्यं प्रकृतिर्न तु वंश एव ॥

## स्पृहेरीप्सितः । ३६ ।

कथं 'स्पृहणीया विभूतिः' स्पृहणीया विभूतये इति स्यात् । पुष्पाणि स्पृहयतीति कर्मत्वमनेन सम्प्रदानत्वप्रसङ्गात् । उच्यते । 'ईप्सिततमत्वविवक्षायां कर्मसंज्ञैव परत्वाद्' इति न्यासः ॥

## क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः । ३७ ।

कथम् अस्मान्द्वेष्टि । उच्यते । 'अप्रीतौ हि द्विषिं स्मरन्ति' इति न्यासः। कथं तर्हि 'द्वेष्टि मायो गुणेभ्यो यत्र च खिद्यति कस्यचित्' । इति भट्टिः । उच्यते । असूयार्थस्याविवक्षितत्वात् । कथं 'तां प्रति क्रुद्धो नृपः' । उच्यते । यं प्रति कोप इति निर्देशात् पूर्वविप्रतिषेधेन चतुर्थीं बाधित्वा कर्मप्रवचनीयाद्विभक्तिर्द्वितीया । एवं 'वृक्षं वृक्षं प्रति कुसुमानि सन्ती'ति । 'अर्थमर्थं प्रति शब्दनिवेशः' इत्याधारसप्तमीं बाधित्वा द्वितीयेति 'साधुनिपुणाभ्याम्' (२-३-४३) इत्यत्र रक्षितः ॥

## उपान्वध्याङ्वसः । ४८ ।

कथम् 'उपोष्य रजनीमेकां पञ्चगव्येन शुध्यति' । तथा 'एकादशीमुपवसन्ति निराबुभुक्षाः संवत्सरं च कुसुमैर्हरिमर्चयन्ति' । 'वसेरश्यर्थस्य प्रतिषेधो वक्तव्य' इति वचनात् कर्मत्वाभावात् । उच्यते । 'कालाध्वनोरत्यन्तसंयोगे' (२-३-५) इति द्वितीया । यद्येवं कथम् 'एकादश्यां न भुञ्जीत' 'उपपदविभक्तेः का-

---

१. ईप्सित इति. अन्धो हि गन्तव्यं जिगमिषन्नज्ञानात् कूपमपि जिगमिषतीति कूपस्येप्सितत्वम्. २. कर्मत्वमिति. वयमित्यनुषज्यते. ३. द्वितीयेति. एतदर्थाधिकरणसंज्ञा कर्मसंज्ञया बाधिता तस्याः प्रतिषिद्धायाः पुनर्नोन्मज्जतीत्याशातदर्शने कारकसंज्ञया अप्रसक्तं मत्वोक्तम्. वस्तुतो हि अप्राप्त्यनुमान बाध इति वार्तिकेनापाकृतां गतेन कर्मसंज्ञाविधिना भोजननिवृत्तिभिन्नार्थवृत्तितयातिनिषेधेऽधिकरणसंज्ञया अप्रासिद्धिःप्यदे इति भोजननिवृत्त्यर्थवसतिप्रयोगे सा दुर्वारा. अत एवाह्वेराह—यद्येवमिति.

रकविभक्तिबलीयस्त्वात् । उच्यते । 'उपपदविभक्तिरि'त्यादे(रन्त)रङ्गफलत्वात् सामान्यचिन्तायां[2] पूर्वविप्रतिषेधेन वोपपदविभक्तिः[3] ॥

## कर्तुरीप्सिततमं कर्म । ४१ ।

कथम् ओदनं पचति । वस्त्रं वयति । अनयोः (प्रकारवचन ?)पाकवानायोगात् कर्मत्वाप्रसङ्गात् । उच्यते । 'तादर्थ्यात् ताच्छब्द्येनौदनवस्त्रशब्दौ तण्डुले तन्तौ च वर्तेते' इति रक्षितः ॥

## गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ ।

कथं गमयति ग्रामं विप्रमिति । अणि कर्तुः कर्मत्वे तत्क्रियाप्यत्व ग्रामस्य कर्मत्वं न स्यात्, कर्मसंज्ञाविधौ कर्तृग्रहणात् । उच्यते । 'तत् कर्तृग्रहणं स्वतन्त्रोपलक्षणं कर्मत्वेऽपि स्वव्यापारे स्वातन्त्र्यस्यानपगतत्वात्' इति रक्षितः । कथम् 'अयाचितारं न हि देवदेवमद्रिः सुतां ग्राहयितुं शशाके'ति कुमारः । ग्रहेरगत्यर्थत्वात् । उच्यते । देवदेवमयाचिताद्रिः सुतां ग्राहयितुमलमत्यर्थं न शशाकेत्यर्थः । देवदेवेनेति प्रकृतत्वात् परिणामात् । रलयोरेकत्वस्मरणादरमिति । 'अकथितं च' (१-४-५१) इत्यत्र चकारस्यानुक्तसमुच्चयार्थत्वाद् अत्र कर्मत्वमित्यन्यः । अपशब्दोऽयमित्यनुन्यासः । चकाराद् 'देवासुरैरमृतमम्बुनिधिर्ममन्थे' इति । 'देवदत्तेन यज्ञदत्तः शतं दापित' इत्यपि साधवः । 'पूतनापादद्विपो धूर्षु युक्तान् यानस्य याजिनः । कार्यूंषि त्वक्षु निर्भिद्य मामङ्गनिरमोचयद्' इति भट्टिः । अत्र मुचेर्गुणभूतगत्यर्थत्वात् कर्मत्वम् । गुणभूता च गतिः कर्मसंज्ञानिमित्तं, 'नीवह्योः प्रतिषेधो वक्तव्य' इति ज्ञापकात् । 'प्रापणं गुणभूतगत्यर्थमि'ति रक्षितः । एवञ्च 'मुक्ताजालं चिरपरिचितं त्याजित दैवगत्ये'ति मेघः । त्यागस्य गत्युपसर्जनीभूतत्वात् । तथा 'हितं लम्भयति विनिवर्तनाद्धीर' इति प्रयोगः (सुख ?)लम्भनस्य प्राप्तेर्गत्युपसर्जनीभूतत्वात् । यद्येवं 'सितं सितिम्ना सुतरां मुनेर्वपुर्विसारिभिः सौधमिवाथ लम्भयन् । द्विजावलिव्याजनिशाकरांशुभिः शुचिस्मितां वाचमवोचदच्युतः' । इति माघः । उच्यते । लम्भयन् योजयन्नित्यर्थः । अथ कथं

---

१. अधिकरणसप्तम्या न्याय्यत्वादिति शेषः. २. आधारत्वरूपविशेषाविवक्षायामित्यर्थः. द्वितीयायाः कारकविभक्तित्वाभिमाने विशेषचिन्तायामपि न क्षतिरित्यभिप्रायेणाह — पूर्वविप्रतिषेधेन वेति. ३. एवञ्चैव पूर्वप्रयोगेऽप्युपपत्तिरस्त्विति हृदयम्. ४. काव्यालङ्कारवामनस्तु गुणभूताया गतेः कर्मसंज्ञानिमित्तत्वममन्यमानो गत्युपसर्जनप्राप्त्यर्थकस्य लभेः प्रयोगे कर्तुः कर्मसंज्ञानिरह न्याय्यमाह

'विधिप्रयुक्तसत्कारैः स्वयं मार्गस्य दर्शकः । स तैराक्रमयामास शुद्धान्तं शुद्धकर्मभिः' इति कुमारः । आक्रमणस्य गुणभूतगत्यर्थत्वात् । उच्यते । 'विधिप्रयुक्तसत्कारान् शुद्धान्तं शुद्धकर्मणः' इति द्वितीयान्तपाठः कर्तव्यः । अथ वा 'ज्ञापकसिद्धं न सर्वत्रे'ति गुणभूतगत्यर्थेन क्वचिदेव कर्मत्वम् ॥

## ऊर्यादिच्विडाचश्च । ६१ ।

कथं 'वारुणीमदविशङ्कमथाविश्चश्रुपोऽभवदसाविव रागः' इति माघः । आविश्शब्दस्योर्यादित्वाद्गतित्वे 'ते प्राग्धातोः' (१-४-८०) इति भवतेः प्राग्विधानात् । उच्यते । 'अन्तश्चश्रुपोऽभवदि'ति पाठः कर्तव्यः । अथ वा 'गणकार्यमनित्यमि'ति सामान्येनाश्रयणीयम् । ध्या चिन्तायामिति दिवादौ पठितव्ये 'ध्यै चिन्तायामि'ति ज्ञापकात् । कथं 'पुरो रामस्य जुहवांचकार ज्वलने वपुः' इति भट्टिः । अनेन गतित्वे धातोः प्राक् तत्प्रसङ्गात् । उच्यते । क्रियायोग इत्यनुवृत्तेः क्रियायोगे गतित्वम् । न चात्र क्रियायोगः । 'क्रियायोग एवेत्यवधारणमि'ति पुरुषोत्तमः । एवञ्च 'तस्य स्थित्वा कथमपि पुरः कौतुकाधानहेतो'रिति मेघः । पुरोऽङ्कायाः कौतुकाधानहेतोरिति वात्र केचिद्योजयन्ति । अथवा 'ते प्राग् धातोः' इति संज्ञानियमः, येषां गत्यादिसंज्ञा विधेयास्ते धातोः प्राक्प्रयुज्यमानाः सन्तः (स्वयं?) संज्ञां लभन्त इति । एवञ्च प्रयोगस्यानियतत्वात् यथादर्शनं व्यवहितः प्रयोगः ॥

## विभाषा कृञि । ७२ ।

कथं 'भृत्यं तिरस्कृत्य गत' इति । 'तिरोन्तर्धावि'त्यनुवृत्तेः अत्रान्तर्धाभावात् । उच्यते । व्यवस्थितविभाषाविज्ञानात् ॥

## युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः । १०५ ।

कथं परमत्वं पठसि 'ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति' इति प्रतिषेधादिति । ननु तदन्तत्वं स्वीक्रियते । कथमातित्वं पचतीति । " 'स्वं रूपमि'त्यत्र रूपग्रहणाद्युष्मदर्थोऽन्यङ्गीक्रियते इति ज्ञापितम् । तेनार्थान्तरवृत्तित्वात् प्रथमपुरुष एव । अत्र त्वं सम्पद्यते त्वद्भवतीत्यत्र प्रथमपुरुष एव युष्मदर्थस्य गौणत्वाद्, यथा अमहान् महान् सम्पन्नो महद्भूतश्चन्द्रमा इत्यत्र 'आन्महतः' (६-३-

१. प्रत्ययविशब्देश्यतया यत् गृह्यते, यथा 'दूर्गादिनिः' 'गमूर्तेज' (१-१-८७) इति ज्ञानकस्थले, तद्विषयत्वात् प्रतिषेधस्येति भावः.

४६) इत्यादिना नात्वं भवति" इति* न्यासः । भवान् यातीत्यत्र तु सत्यपि युष्मदर्थे रूपाभावान्न भवति । अर्थवतो रूपस्य ग्रहणात् । न चात्र रूपस्य गम्यमानत्व । भवच्छब्देनार्थस्योक्तत्वात् त्वत्तरो यासीत्यत्र तरपः स्वार्थिकत्वाद्युष्मद्युपपद इति मध्यमपुरुष । 'त्वत्कल्पो देवदत्तो याती'ति रक्षितः ॥

## अस्मद्युत्तमः । १०७ ।

कथमहमिव करोति । उत्तमपुरुष एव करोतेर्युक्तः । उच्यते । 'गौणत्वादस्मदर्थस्य नोत्तमपुरुष' इति रक्षित ॥

इति शरणदेवविरचितदुर्घटवृत्तौ

प्रथमाध्याये चतुर्थ पादः.

---

# अथ द्वितीयाध्याये प्रथमः पादः.

## समर्थः पदविधिः । १ ।

**कथम्** असूर्यपश्या राजदारा, अश्राद्धभोजीत्यादौ नञ्समासः क्रियया नञ्सम्बन्धादसामर्थ्यात । उच्यते । गमकत्वात् 'गमकात् समासो वेदितव्य' इति भाष्यम् । 'अकर्तरि च कारके' (३-३-१९) इत्यत्र कारकग्रहणात् प्रसज्यप्रतिषेधेऽपि नञ्समासः । पर्युदासे हि नञिवयुक्तन्यायेनाकर्तरीत्येव कारकसिद्धौ कारकग्रहणं व्यर्थं स्यादित्यन्य । सुट् स्त्रीपुंसयोरिति वक्तव्ये 'सुडनपुंसकस्ये'ति ज्ञापकमिति भागवृत्ति । "'अङ्गयुक्त तिडाकाङ्क्षम्' (८-२-९६) इति युक्तग्रहणात् ज्ञापकात् समर्थपरिभाषाया अनित्यत्वेऽसमर्थेऽपि पदविधिरि"ति रक्षितः । एव च वय गच्छामस्त्वमागमिष्यसीत्यसमर्थेऽपि विसर्जनीयादिकम् ॥

## सह सुपा । ४ ।

कथं 'साम्प्रतिकाभावे भूतपूर्वगतिरि'त्यत्र भूतपूर्वशब्दः समासलक्षणाभावात् । उच्यते । सुप्सुपेति योगविभागात् । 'भूतपूर्वे चरट्' (५-३-५३) इति प्रथमः । एवं दृष्टपूर्वश्रुतपूर्वपूर्वविप्रतिषेधाध्वगन्तव्यादयः ॥

**अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासंप्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसम्पत्तिसाकल्यान्तवचनेषु ।**

---

* 'इत्यत्र' इति खपुस्तके पाठः.

कथं प्रत्यक्षः शब्दः अक्षमक्षं प्रतीति वीप्सायां यथार्थेऽव्ययीभावात् । उच्यते । प्रतिगतोक्षमिति विगृह्य 'प्रादयो गताद्यर्थे द्वितीयये'ति समासः । 'न द्विगुप्राप्तापन्नाल'मित्यादिना परवल्लिङ्गतानिषेधः । अर्थमर्थं प्रति प्रत्यर्थमिति वाक्यम् वीप्सायां नित्यसमासात् । उच्यते । "'लक्षणेत्थंभूते' (१-४-९०) त्यादिना वीप्सायां कर्मप्रवचनीयसंज्ञाविधानसामर्थ्या(दिति?)त् कर्मप्रवचनीयविभक्तिरपि द्वितीया श्रूयत इति †वाक्यम्" इति न्यासः । कथमेकैकं प्रति प्रत्येकमिति । उच्यते । 'एकं बहुव्रीहिवत्' (८-१-९) इत्यतिदेशात् 'सुपो धातु' (२-४-७१) इति लोपः । कथमुपरि शिरसो घटं धारयतीति विभक्त्यर्थेऽव्ययमिति समासात् । उच्यते । समीपादिभिरतद्धितान्तैः साहचर्यात् तद्धितान्तस्य विभक्त्यर्थेऽसमासात् । कथं समया ग्राममिति 'अभितःपरितःसमयानिकषे'ति वार्तिकोदाहरणम् । उच्यते । 'द्वितीयाविधानसामर्थ्यान्नाव्ययीभावः' इति रक्षितः । ननु शोभनं समया ग्राममिति सविशेषणस्य समासाभावे द्वितीयाविधानं कृतार्थम् । उच्यते । व्यक्तौ सामर्थ्यं वाच्यम् । कथं 'पुरो रामस्य जुहवाञ्चकार ज्वलने वपु'रिति भट्टिः । विभक्त्यर्थे यदव्ययमिति समासात् । उच्यते । व्यृद्धिशब्दस्याल्पाच्तरस्यापूर्वनिपातेनास्यानित्यत्वज्ञापनात् । समीपादिवृत्तिनाव्ययेनातद्धितान्तेन साहचर्यादतद्धितान्तमेवाव्ययं विभक्त्यर्थे विधमानं गृह्यते । अथ गमकत्वाद्वेत्युभय रक्षितेनोक्तम् । एवं (प्रत्यां?) परीत्यादि ॥

## यथासादृश्ये । ७ ।

कथं यथोक्तरीत्येति 'कतरकतमौ जातिपरिप्रश्ने' (२-१-६३) इत्यत्र न्यासः । कथं *'यथाशक्त्या करिष्यसी'ति कायस्थोक्तिः* । उच्यते । सादृश्येऽसमास एवायम् । तदयमर्थः—येन प्रकारेणोक्तरीतिस्तेनैव प्रकारेणोक्तमिति । एव यथा त्वं शक्तस्तथा शक्त्यानुरूप्येणेत्यर्थः ॥

## अपपरिबहिरञ्चवः पञ्चम्या । १२ ।

१. **सविशेषणस्येति.** 'सविशेषणाना वृत्तिर्न वृत्तस्य वा विशेषणयोगो न' इति वार्तिकम् .

२. व्यक्तिपक्षे सर्वासु व्यक्तिषु चारितार्थ्यस्यापेक्षितस्याभावात् सामर्थ्यं सुवचमिति समाधत्ते **व्यक्तौ सामर्थ्यं वाच्यमिति** । अथवेव व्याख्यायते—व्यक्तौ शुद्धे निर्विशेषणे प्रयोग एवेत्यर्थः । अयमाशयः—नित्यत्वादव्ययीभावे वृत्ते वृत्तस्य विशेषणायोगेन सविशेषणप्रयोगस्य चारितार्थ्यभूमेरलाभादव्ययीभावविषय एव चारितार्थ्यं वक्तव्यमित्यभ्युपगम्य द्वितीयाविधानस्य सामर्थ्यमिति ॥

† 'वा वाक्य' इति कपुस्तके पाठः.

कथमपशब्दः, अपन्यायः, अपव्यवहारः अपगतः शब्दादित्यभिन्नार्थेऽनेन समासात्। उच्यते। 'कर्मप्रवचनीयानां प्रतिषेध' इति प्रतिषेधवचनात्[1] कर्मप्रवचनीयेऽस्य कृतार्थत्वादन्यत्र परत्वादन्तरङ्गत्वाच्च समासः। कथं बहिर्ग्रामादिति पञ्चमी, विधानाभावात्। उच्यते। अत एव पञ्चम्या समासविधानाद्बहिःशब्दयोगे पञ्चमीति वृत्तिः[2]। कथं 'करस्य करभो बहिरि'त्यमरः। उच्यते। 'ज्ञापकसिद्धं न सर्वत्रे'ति ज्ञापकसमुच्चयः॥

## तिष्ठद्गुप्रभृतीनि च। १७।

कथम् 'आतिष्ठद्गु जपन् सन्ध्याम्' इति भट्टिः। चकारेण वृत्तौ समासान्तरनिवर्तनात्। उच्यते। एवार्थेनाव्ययीभावविलक्षणं समासान्तरं निवर्त्यते, नाव्ययीभावः। तेन 'आङ्मर्यादाभिविध्योः' (२-१-१३) इति समासो भवत्येवेति जयमङ्गला॥

## अन्यपदार्थे च संज्ञायाम्। २१।

'अगात् सराजं बलमध्वनीन'मिति भट्टिः। नदीभिश्चेत्यनुवृत्तेः। बहुव्रीहौ तु 'अनश्च' (५-४-१०८) इति समासान्तो न स्यात्। अव्ययीभावानुवृत्तेः। उच्यते। यौगपद्येऽव्ययीभावः। 'साष्टे शते सुवर्णाना'मित्यमरः॥

## द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः। २४।

कथं §परार्धभारानिर्वोढुं (प्रभवेयं भवेद्व्यक्तिः?) धर्मकीर्तिः। 'न लोके'ति (२-३-६९) षष्ठीनिषेधात् तत्रानुकूलत्वात्[3]। उच्यते। द्वितीयेति योगविभागात्, सुप्सुपेति वा §परार्धभारमुद्वोढुमिति वा पाठः कर्त्तव्यः॥

## तृतीया तत्कृतार्थेन गुणवचनेन। ३०।

कथम् 'एकध्वनिमुखरशीकरपल्लवितः', तथा 'रत्नज्योतिर्दन्तुर' इति। 'खमुखकुञ्जेभ्यो रः' (५-२-१०७) 'तारकादिभ्य इतच्' (५-२-३६) 'दन्त उन्नत उरच्' (५-२-१०६) इति व्युत्पन्नस्य मुखरादेरगुणवचनत्वात्[4]। उच्यते।

---

१. प्रतिषेधवचनादिति 'कुगतिप्रादयः' (२-२-१८) इति समासस्येति शेषः. २. वृत्ताविति काशिकायाम्. ३. तत्रानुकूलत्वादिति. षष्ठ्या हि प्रयोगसिद्धिं प्रत्यानुकूल्यमस्ति षष्ठीसमासप्रवर्तनाद्; न पुनर्द्वितीयायामित्यर्थः. ४. अगुणेति. गुणो ह्यत्र 'सत्त्वे निविशतेऽपैति' इति लक्षितो गृह्यते.

---

§ 'परार्ध्य' इति कपुस्तके पाठः.

तृतीयेति योगविभागस्य कैयटेनोक्तत्वात्, 'कर्तृकरणे कृता बहुलम्' (२-१-३२) इति बहुलवचनात् ॥

पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः । ३१ ।

कथं गुरुतुल्यः सदृशशब्दस्य स्वरूपग्रहणात् । उच्यते । तुल्यार्थैः पष्ठ्यन्यतरस्यामिति षष्ठीसमास इति ॥

चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः । ३६ ।

कथं वासगृहम्, अश्वघास इति 'तदर्थेन प्रकृतिविकारभावे समासोऽयमिष्यत' इति वचनात् । तेन रन्धनाय स्थालीत्यत्र न समासः । उच्यते । षष्ठीसमासोऽयमिति कैयटः ॥

पञ्चमी भयेन । ३७ ।

कथं 'नीवीमतिक्रम्य सितेतरस्य तन्मेखलामध्यमणेरिवार्चि'रिति कुमारः । इतरशब्दस्याभयशब्दत्वात् । उच्यते । पूर्वोक्तबहुलग्रहणात् । तथा च न्यासः— 'बहुलग्रहणप्रपञ्चोदाहरणान्येतानी'ति । सित इतरो यस्मादिति बहुव्रीहिर्वा । कथं 'परश्शताद्या' इत्यमरः । तथा 'आलोकयामास हरिर्महीधरानधिश्रयन्तीर्गजताः परश्शताः' इति माघः । उच्यते । शतात् परं इति विगृह्य पञ्चमीति योगविभागात् समासः । राजदन्तादित्वात् परनिपातः । मयूरव्यंसकादित्वाद्वा । पारस्करादित्वात् सुट् । लोकाश्रयत्वाल्लिङ्गस्य न परवल्लिङ्गता । 'स्त्रियाः पुंवदि'ति (६-३-३४) योगविभागात् पुंवत्त्वम् । एतत् सर्वं 'गाङ्कुलौ' (१-१-१०) इत्यत्र परश्शतानीति व्याचक्षाणेन भाष्यटीकाकृतोक्तम् । पारस्करादिपाठादेतत् सिद्धमित्यन्यः । एवं 'परिमाणं शतादूर्ध्वं परःशतमुदाहृतम्' 'ब्रह्मादयो ब्रह्महिताय तप्त्वा परःसहस्राः शरदस्तपांसी'ति भवभूतिः ॥

कृत्यैर्ऋणे । ४६ ।

कथं 'संवत्सरकरणीयमि'ति 'यत्प्रत्ययेनैवेष्यते' इति वचनात् । उच्यते । सप्तमीसमासोऽयं । बहुलवचनाद्वा ॥

पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन । ४९ ।

१. तुल्यार्थैः पष्ठ्यन्यतरस्यामिति. तुल्यार्थैयोगे षष्ठ्यपि पक्षे विहितेति हेतोरित्यर्थः.

कथं 'वर्णकं देहि' पूर्वकालैकेतिसमासे एकशब्दस्य पूर्वनिपातात्। उच्यते। 'द्व्येकयोर्द्विवचनैकवचने' (१-४-२२) इति वचनात् द्व्येकशब्दौ संख्यावचनौ। अं दशतः सङ्ख्या सङ्ख्येय इति प्रायिकम्। तेन वर्णकमिति षष्ठीसमासे धर्मधर्मिणोरभेदोपचाराद्धर्म्यभिधायित्वम्। अपशब्द एवायमित्यन्यः। 'पुराणैकं देहीति साध्वेव। अनेन समासे शब्दपरविप्रतिषेधात् पुराणशब्दस्य पूर्वनिपातात्' इति रक्षितः। कथं 'शरवर्षमनेकमेकवीर' इति माघः। पूर्वकालैकेति परत्वात् 'पूर्वापरप्रथम'(२-१-५८) इत्यादिना समासे पूर्वनिपातप्रसङ्गात्। उच्यते। पूर्वविप्रतिषेधोऽत्र द्रष्टव्यः॥

## तद्धितार्थोत्तरपदसमाहारे च। ५१।

कथं पैञ्चगुः पुरुषः। (तथा?) उच्यते। तद्धितार्थे मत्वर्थे नेष्यते 'अनभिधानात् पञ्चगुरि'ति रक्षितः॥

## सङ्ख्यापूर्वो द्विगुः। ५२।

कथमेकापूपीति। कुत्सितस्य दाने एकस्मिन्नेवापूपे समाहारारोपात्। 'स त्पात्रस्य महाफलत्वाच्च समाहारारोप' इति रक्षितः॥

## विशेषणं विशेष्येण बहुलम्। ५७।

कथं मेरुपर्वतः, कैलासाद्रिः, शिंशपावृक्षः, शमीतरुः, तर्कविद्या, व्याकरणशास्त्रम्, भाष्यकर्मेत्यादि। तथा —

'कार्तवीर्यार्जुनो नाम राजा बाहुसहस्रभृत्।
तस्य सङ्कीर्तनादेव हृतं नष्टं च लभ्यते'॥

इति। विशेषणमित्येतावत्युक्ते सम्बन्धिशब्दाद्विशेष्येणेति लब्धे विशेष्यग्रहणेनोभयतो विशेषणविशेष्यभावे* समासविधानात्। इह मेरुप्रभृतिशब्दादेव पर्वतादेः प्रतीतिरिति न पर्वतादीनां विशेषणत्वम्। उच्यते। बहुलवचनाद् भविष्यति कार्तवीर्यार्जुन एवायमपशब्दः। वृत्तौ बहुलवचनाद्व्यावृत्तेः। श्लोके तु कार्तवीर्यो

१. पञ्चगुरिति. अत्र मत्वर्थस्तद्धितार्थ इति कृत्वानेन समासप्रसङ्गो मतुपश्च श्रवणं स्यात्. २. नेष्यत इति. 'सर्वत्र मत्वर्थे प्रतिषेध.' इति वार्तिकादिति शेषः. 'शेषो बहुव्रीहि.' इति प्रथमान्तानां शेषपदार्थत्वे तु परत्वाद् बहुव्रीहिर्बोध्यः. ३. वृत्तावितिति. काशिकायां हि 'वचिन रामो जामदग्न्यः, अर्जुनः कार्तवीर्यः' इत्युक्तम्.

* 'भावेन' इति क्पुस्तके पाठः.

ऽर्जुन इत्यसमास एव । इदंस्त्री इदम्पुमान् इति विशेषणसमास एव । इदमा परोक्षव्यावृत्तिः । स्त्रीपुम्भ्यां शाटीघटादिनिवृत्तिरित्युभयगतं विशेषणविशेष्यत्वमत एव हि भाषावृत्तावुदाहृतम् । कथं

'परोक्षे कार्यहन्तारं प्रत्यक्षे प्रियवादिनम् ।
तादृशं वर्जयेन्मित्रं विषकुम्भपयोमुखम्' ॥

इति पयोमुखविषकुम्भमिति युक्तम्[1] । उच्यते । विषकुम्भ इव विषकुम्भः । पयोमुखमिव पयोमुखम् । ततः कर्मधारयोऽयमित्यत्रोच्यते । अथ वा विषकुम्भमिव पयोमुखमिवेति भिन्नपदे लुप्तोपमे ॥

## पोटायुवतिस्तोककतिपयगृष्टिधेनुवशावेहद्वष्कयणीप्रवक्तृश्रोत्रियाध्यापकधूर्तैर्जातिः । ६५ ।

कथं 'जनयति कुमुदभ्रान्तिं धूर्तबको बालमत्स्यानाम्' इति । अनेन समासे बकधूर्त इति स्यात् । उच्यते । व्यक्तिपरोऽत्र बकशब्द इति कश्चित् । 'कुत्सितानि कुत्सनैः' (२-१-५३) इति नास्ति शब्दप्रवृत्तिनिमित्तकुत्सायां समासो जातेः स्वयमकुत्सितायाः कुत्सासम्भवादिति न्यासः[2] ॥

## कृत्यतुल्याख्या अजात्या । ६८ ।

कथं 'तस्य सत्कृत्यशालिन' इति भट्टिः । 'सन्महदि' (२-१-६१) त्यादेः परत्वादनेन समासे कृत्यसदिति स्यात् । उच्यते । पूर्वविप्रतिषेधोऽत्र द्रष्टव्यः । सतां कृत्यं सत्कृत्यमिति षष्ठीसमासो वेति । एव परमपूज्य ॥

इति शरणदेवविरचितदुर्घटवृत्तौ

द्वितीयाध्याये प्रथमः पादः ॥

अथ द्वितीयः पादः ।

## पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे । १ ।

---

१ युक्तमिति जातिगुणशब्दयोनिपाते गुणशब्दस्य विशेषणतया पूर्वनिपातः स्यादित्यर्थः. २ तत्र इति. एवञ्च द्वयोरपि पदयो [illegible] विशेषणविशेष्यभावे कामचारलाभः. ३ अत एवात्र शब्दौ [illegible]

## अर्धं नपुंसकम् । २ ।

कथं 'प्रेम्णा शरीरार्धहरां हरस्ये'ति कुमारः । षष्ठीसमासोऽयम् । तथा च भाष्ये एकदेशिसमासं प्रत्याख्याय विशेषणसमासेन समुदायवृत्तीनामवयववृत्तौ सिद्धे[1] यत्र षष्ठीसमासो दृश्यते तत्र भवत्येव यथापूपार्धं मया भक्षितमिति ग्रामार्धं त्वया लब्धमित्युक्तम् । वृत्तौ 'षष्ठीसमासापवादोऽयम्' इत्युक्तम् । तन्मतेन 'द्वितीयतृतीय' (२-२-३) इत्यतोऽन्यतरस्याग्रहणानुवृत्तेर्व्यवस्थितविभाषाविज्ञानात् षष्ठीसमासः ॥

## प्राप्तापन्ने च द्वितीयया । ४ ।

कथं प्राप्ता जीविकां प्राप्तजीविका । असामानाधिकरण्येऽपुंवद्भावात् । उच्यते । 'स्त्रियाः पुंवद्' (६-३-३४) इति योगविभागात् पुंवद्भाव इति न्यासः । 'प्राप्तापन्ने चे'त्यविभक्तिकाकार§प्रश्लेषादकारश्च पूर्वपदस्यानुविधीयत इति भागवृत्तिः । 'ईदूदेद् द्विवचनम्' (१-१-११) इति प्रगृह्यत्वं नास्ति सौत्रत्वान्निर्देशस्य[2] ॥

## नञ् । ६ ।

कथं 'पतन्त्यनेके जलधेरिवोर्मयः' इति भारविः । तथा 'अनेकेषां नानास्थाने'ति न्यासः । उत्तरपदार्थप्रधानत्वान्नञ्समासस्य । एकत्वबुद्ध्या भ्रम इत्यतोऽयमेकशब्द एकस्मिन्निति एक(स्मिन्नेव) वचनमेव युज्यते । ज्ञापकं च 'अनेकमन्यपदार्थे' (२-२-२४) इति । तथा च माघः —'करेणु प्रस्थितोऽनेको रेणुर्घण्टाः सहस्रशः' इति । अत एव भागवृत्तिकृता'नेकेषामिति *जैनेन्द्रोक्तम् । कालदुष्टा एवापशब्दा ' इति । रक्षितस्त्वाह — अध्यारोपितबहुत्वाद् बहुवचनं यथा 'धुञ्भो लुङि' (१-३-९१)' वृद्भ्यः स्यसनोः' (१ ३-९२) इति । जहद्धर्मत्वाच्छब्दप्रवृत्तेरिति[3] वा एकशेषेण वा बहुवचनमिति असाधारणसिद्धान्तः । नञर्थः प्रस-

---

१ सिद्धे इति । एकदेशिसमासफल इति शेषः  २ सौत्रत्वादिति । न च द्वितीययेत्यनाकारप्रश्लेषो युक्तः, तस्य चकारबलानुमेयस्य चकाराव्यवहितपूर्वस्थानताया औचित्यादिति भावः  ३ जहद्धर्मत्वादिति शब्दो हि कश्चित् क्वचित् स्वधर्मं हित्वा धर्मान्तरमुपादत्ते यथाभिन्न इत्यत्र भिन्नशब्दः धर्मश्च लिङ्गरूपो वचनरूपो वा स्यात्  ४. 'अनेकधानेकधानेकधेत्येकदेशो वा' इति शब्दकौस्तुभ

---

§ 'निशेषाद्' इति खपुस्तके पाठः  * 'जयमङ्गलोक्तम्' इति खपुस्तके पाठः

ज्ञादुच्यते। चत्वारो नञर्थाः। 'साहश्यान्यविरोधेषु प्रसक्तस्य निवर्तने'। भाष्ये तु षड् प्रकीर्तिताः—

'तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता।
अप्राशस्त्य विरोधश्च नञर्थाः षड् प्रकीर्तिताः'॥

## षष्ठी। ८।

कथम्

'एष वन्ध्यासुतो याति खपुष्पकृतशेखरः।
मृगतृष्णाम्भसि स्नात्वा शशशृङ्गधनुर्धरः'॥

इति, वन्ध्यादेः सुतादिसम्बन्धाभावात् षष्ठ्यभाव। उच्यते। बुद्ध्यवसितोऽत्र सम्बन्धः। यथा शिलापुत्रकस्य शरीरमित्यत्र भेद। 'विवक्षाधीना हि शब्दव्युत्पत्तिरि'ति 'तदाद्याचिख्यासायामि'(२-४-२१)ति सना ज्ञापितम्॥

## न निर्धारणे। १०।

निर्धारणं व्यवहार। स चेह् समुदायैकदेशता। तथा चानुन्यासः—'स भगवान् पुरुषोत्तम उत्तमशब्देनैकदेशरूपतयाख्यायते'। किन्तु पारम्पर्येणोक्तो विषयोऽयं प्रतिषेधस्य। 'सप्तमी'(२-१-४०)ति योगविभागात् समास इति पुरुषोत्तमः। 'प्रतिपदविधाना च षष्ठी न समस्यत' इत्युक्तम्। कथं तर्हि गोस्वामीत्यादि षष्ठ्याः प्रतिपदविधानात्। उच्यते। नेय प्रतिपदविधाना, किन्तु सप्तम्या बाधकमतिषष्ठ्यौ प्रतिप्रसूयमाना। तेन गोस्वामीत्यादि सिध्यतीति रक्षित॥

## पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन। ११।

कथं 'तमस्तानवमि'ति तानवस्य गुणत्वेनानेन षष्ठीसमासनिषेधात्। उच्यते। 'अधिकरणैतावत्त्वे' (२-४-१५) इति निर्देशात्। कथं (विभुत्वादुपरि?) 'तदुपरि'। तथा 'यत्कृतेऽस्मिन् निगृहीम' तथा 'आदेया किंकृते भोगा कुम्भकर्ण! त्वया विने'ति भट्टि। अव्ययेन न समास इति निषेधात्। उच्यते। कृता साहचर्यादव्ययस्य कृतो ग्रहणमिति रक्षित। यद्येवम् 'अनुयत्समया'(२-१-१५)

---

१ षडिति अब्राह्मण, अपापम्, अनश्व, अनुदरा कन्या, अपचति, अधर्म इति तेषामुदाहरणानि २ व्यवहार इति स च [illegible] तद्विषयानि स चेति. ३- पूर्वोत्तरसाहचर्यात् इदव्ययस्य ग्रहणे [illegible] समासाभावमाद, [illegible] न्यासे [illegible] समासाभाव इति [illegible] 'अभित:परित' इति [illegible] उच्यत इति [illegible] समास इति [illegible] षष्ठ्या अपि.

इत्यत्र यस्य समया यत्समयेति 'पूरणगुणे'त्यादिना समासाभावोऽत्राव्ययेन, समयाशब्देनानुशब्दोऽत्रोच्यते, तेन द्रव्यवृत्तित्वादनव्ययत्वे समास उक्तो न्यासकृता। पूर्वपक्षावसर इदमुक्तमिति रक्षित। साहचर्यमनाश्रित्य प्रकारान्तर वा सत्। कथं 'सत्कर्तव्यमि'ति। उच्यते। तृतीयासमासोऽयम्। सुहितार्थास्तृप्त्यर्था। तद्योगे षष्ठी समासनिषेधाद् ज्ञापकात् एवञ्च —

'नाग्निस्तृप्यति काष्ठाना नापगाना महोदधि।
नान्तक सर्वभूताना न पुसा वामलोचना॥' इति।

यद्येवं 'फलैर्नानारसै शुद्धै स्वादुशीतैश्च वारिभि। तृप्तास्ता भ्राजथुमतीमपृच्छन् कस्य पूरियम्' इति भट्टि। 'फलैर्वेष्याशितम्भवम्' इति च। उच्यते। 'ज्ञापकासिद्ध न सर्वत्रे'ति ज्ञापकसमुच्चय। अथवा 'विवक्षात कारकाणि भवन्ती'ति करणविवक्षाया तृतीया। शेषत्वविवक्षाया षष्ठी॥

## क्तेन च पूजायाम्। १२।

कथं 'कलहसराममहित कृतवानि'ति भट्टि। तथा राजपूजित। ईश्वरज्ञात। अनेन समासनिषेधात्। उच्यते। तृतीयासमासेन राजपूजितादयइत्यनुन्यास। शेषषष्ठ्या वा समास। एव प्रकरणमिद स्वरार्थं। तथा स्वरार्थोपच्चसूत्रीति भाष्ये॥

## कर्मणि च। १४।

कथं 'गृहवित्तभर्त्रा पुत्रेण' उच्यते। शेषषष्ठ्या भविष्यति। कथं शब्दानुशासन लिङ्गानुशासनमिति। उच्यते। 'उभयप्राप्तौ' (२-३-६६) इतिषष्ठ्या अय समासनिषेध। चकारस्यावधारणार्थत्वात्, 'कर्तरि चे' (२-२-१६)ति सूत्रारम्भाच्च। यदि सामान्यकर्मषष्ठ्या * समासनिषेधोऽनेन स्याद्, इद व्यर्थं स्यात्।

---

१ समाधत्त पूर्वपक्षेति २ षष्ठीति न तु करणत्वविवक्षया तृतीयेत्यर्थ ३ ज्ञापकादिति समासनिषेधो हि सत्या करणत्वविवक्षया तृतीयाया तृतीयासमासेन फलसुहित इति प्रयोगप्राप्ती व्यर्थ स्यात् ४ तृतीयेति अयमाशय — फलसुहित, फलतर्पणमित्यत्र तृतीयासमासे 'तृतीया कर्मणि' (६ २-४८) इति पूर्वपदप्रकृतिस्वरो 'गतिकारके' (६ २ १३९)ति कृदुत्तरपदप्रकृतिस्वरश्च भवत, षष्ठीसमासे तु समासान्तोदात्तत्वमिति विशेष स्थिते षष्ठीसमास प्रतिषेधोऽयं समासान्तोदात्तत्वनिवर्तनेन चरितार्थ इति न ज्ञापक प्रकृतार्थस्येति. ५ राजपूजितादय इति क्तोऽत्र भूते, न तु वर्तमाने, कर्तरि च तृतीया यथा 'पूजितो य सुरासुरै' इति ६ कारकषष्ठीसमासप्रतिषेधस्य तर्हि किं फलमित्याकाङ्क्षायामाह — पचमित्यादि

---

* 'कर्मणि षष्ठ्या' इति खपुस्तके पाठ.

न च प्रेष्यस्य कारयितेत्यत्र 'हृक्रोरन्यतरस्याम्' (१-४-५३) इति कर्मत्वाभावात् कर्तृषष्ठ्यन्तस्य समासनिषेधार्थं भविष्यति, 'तृजकाभ्यां कर्तरी'(२-२-१५)त्येव तत्सिद्धेः। यत्तु तत्र वृत्तावुक्तं—'तृज्ग्रहणमुत्तरार्थमि'ति, तत् 'कर्तरि चे'ति सूत्रे स्थिते। अथ वा षष्ठ्येवात्र नास्ति; प्रत्यासत्त्या हि यस्मात् कृद्विहितस्तत्क्रियायाः कर्तृकर्मणोः षष्ठ्या भाव्यम्। इह ण्यन्तात् कृद्विहितः; प्रेष्यश्चाण्यन्तकर्ता। न च शब्दानुशासनमित्यत्रा'प्युभयप्राप्तावि'ति षष्ठी। 'षष्ठी हेतुप्रयोगे' (२-३-२६) इत्यत एव प्रयोगग्रहणानुवृत्तेः कर्तृप्रयोगे तद्विज्ञानात्। प्रयोगग्रहणं कर्त्रा सम्बध्यते, न च कर्मणा, कर्तृव्यावृत्तौ तत्प्राधान्यात्। एतेन कर्मण्येव प्रयोगे 'उभयप्राप्तावि'ति नियमात् कर्तरि तृतीया। ज्ञापकं वा 'अन्तर्धौ येनादर्शनमिच्छति' (१-४-२८) इति रक्षितः। एवञ्च 'अ इ उण्'त्यत्र 'तस्य ग्रहणं भवत्येकेने'ति सिद्धये 'तस्येति कर्तरि षष्ठी'ति न्यासोऽसङ्गतः अत्रोपग्राह्यकर्मणि गम्यमानेऽपि नियमात्। उच्यते। कर्तरि षष्ठीत्व(न्य?)स्य संस्कृतत्वात् शेषषष्ठी कर्तरि स्यात्। यत्तु अनुन्यासकृतोक्तं—'यत्र सामर्थ्यप्राप्तमुभयोरुपादानं स 'उभयप्राप्तावि'त्यस्य विषयः। अन्यथा 'कर्तृकर्मणोः कृति' (२-३-६५) इत्यस्य विधे'रुभयप्राप्ता'वित्यस्य च विषयविभागो न स्यात्। 'नाकर्तृकं कर्मास्तीति न्यायाद्' इति, तदयुक्तम्। पुरां भेत्तेत्यादावभिहिते कर्तरि नियमाभावात्। अथानभिहिताधिकारमनङ्गीकृत्योच्यते। एवमपि 'अकाकारयोः प्रतिषेधो वक्तव्यः।' 'शेषे विभाषे'त्येताभ्यां नियमव्यावृत्तौ 'कर्तृकर्मणोः कृति' इत्यस्य कृतार्थत्वात्। उच्यते। अस्य विधेरिति व्यधिकरणे षष्ठ्यौ। तदयमर्थः। 'कर्तृकर्मणोरि'त्यस्य यो विधिः 'कर्तरि चे'ति, 'उभयप्राप्तावि'त्यस्य यो विधिः 'कर्मणि चे'ति एतयोर्विषयविभागो न स्यात्। सर्वत्र 'कर्मणि चे'ति निषेधसम्भवात्। अपरं बहुत्वान्नोक्तम्॥

## कर्तरि च ॥ १६ ॥

कथं 'भीष्मः कुरूणां भयशोकहर्ते'ति। उच्यते। तृन्नन्तमेतत्। न च 'न लोकाव्ययनिष्ठेति' (२-३-६९) षष्ठीनिषेधः। 'यतस्तृजकाभ्यामि'(२-२-१५)त्यत्र तृचः सानुबन्धकस्योपादानं तृनो निवृत्त्यर्थं ज्ञापयति तृनो योगे क्वचित् षष्ठीतीति न्यासः। 'द्वितीये'ति (२-१-२४) योगविभागाद्वा समासः। शेषषष्ठीत्यन्यः॥

१. कारिकावाक्यमिदम्. २. संस्कृतत्वादिति। तस्कारस्य कर्तरि शेषत्वेन विवक्षिते षष्ठीत्येवमभेकल्पनया परिष्करणम्. ३. कथमिति। कर्मणि तृजकाभ्यां षष्ठी न समस्यत इति सूत्रार्थात् प्रश्नः.

## कुगतिप्रादयः । १८ ।

कथम् 'अल कुमार्यै' इति वाक्य 'पर्यादयो ग्लानाद्यर्थे चतुर्थ्ये'ति नित्यसमासात् । उच्यते । 'नमस्स्वस्ती'ति (२-३-१६) चतुर्थीविधानसामर्थ्यान्नित्यसमासेऽपि वाक्यम्' इति रक्षित । नन्वलं कुमार्यै शोभनायै इति सविशेषणेऽपि वा समासाभावाच्चतुर्थीविधान कृतार्थम् । उच्यते । व्यक्तौ सामर्थ्यं बोध्यम् । कथमधीत्य 'कर्मप्रवचनीयाना प्रतिषेध' इति वचनादत्र तु सोपसर्गस्याध्ययनार्थत्वादधिशब्दस्यानर्थकत्वे 'अधिपरी अनर्थकौ' (१-४ ९३) इति कर्मप्रवचनीयत्वात् । समुदयार्थम् इङ्युपचर्य धातुत्व न्यास उक्तम् । उच्यते । 'अध्यापकधूर्तैर्जीविरि'ति ज्ञापकत्वात् । अत एवानिस्तुत सुस्तुतमित्यत्रोपसर्गलक्षणषत्वाभाव । कथं 'कुरु तेनेयमि'ति दण्टी । कुशब्दोऽव्यय पापार्थे समस्यत इति प्रतिपादनात् । । 'ईषदर्थे च' (६-३ १०५) इति ज्ञापकात् प्रायिकमुपाधिवचनमिति न्यास. (++न सप्तमीति समासो वा[१] ) ॥

## उपपदमतिङ् । १९ ।

कथं 'साधु खलु पयस पानमि'ति 'कर्मणि च' (२-२-१४) इत्यत्र वृत्ति । 'कर्मणि च येन सस्पर्शात् कर्तु शरीरसुखम्' (३-३-११६) इति ल्युटि अनेन नित्यसमासात् । उच्यते । शरीरसुखस्याविवक्षितत्वान्नात्र कर्मणि ल्युट् , किं तर्हि 'ल्युट् च' (३-३-११५) इत्यनेनेति रक्षित । कथं 'शिखाभिराश्लिष्ट इवाम्भसा निधिरि'ति माघ । तथा 'निस्त्रिंशकल्पस्य निधिर्जलानामि'ति रघुः । परत्वात् 'कर्मण्यधिकरणे च' (३ ३-९३) इति किप्रत्यये नित्यसमासात् । उच्यते । [*शेषपष्ठ्या नात्र कर्मोपपदम् ॥

## अनेकमन्यपदार्थे । २४ ।

कथम् 'अस्तिक्षीरेति, तिङन्तस्यासमासात् ।] उच्यते । विभक्तिप्रतिरूपकोऽयमस्तिशब्द । तिङन्तत्वे वा 'अस्तिक्षीरादिवचन कर्तव्यमि'ति समासः ॥

## उपसर्जनं पूर्वम् । ३० ।

कथम् 'अपेतमर्यिलीमि'ति भट्टि । 'अपेतापोढमुक्ते'ति (२-१-३८) समासे पूर्वनिपातप्रसङ्गात् । उच्यते बहुव्रीहि. । समासान्तो विधिरनित्य इति

---

१. नित्येति । 'ल्युट् च' इत्यनेन सिद्धे 'कर्मणि चे'ति ल्युड्वचनस्य नित्यसमासार्थत्वादिति भाव

* अय कुण्डलरेखान्तर्गतो ग्रन्थांश आदर्शयोर्नास्ति । किन्त्वपेक्षित इत्यूह्यतः केवलम् ।

'नद्यृतश्च' (५-४-१५३) इति न कप् । कथं वार्तिसूत्रिकमिति 'ऋतूक्थादि' (४-२-६०) सूत्रे वृत्ति । सूत्राणा वृत्ति सूत्रवृत्ति । 'तदधीते' इति ऋतूक्थेत्यादिना ठक् । एव सूत्रशब्दस्य पूर्वनिपात स्यात् । उच्यते । वृत्तिश्च सूत्र चेति द्वन्द्व कार्ये । कथं मातु सपत्नी सपत्नीमाता । उच्यते । राजदन्तादित्वात् । माता स पत्नी अस्या इति वा कृते आहिताग्न्यादित्वात् । 'स्त्रिया पुवदि'ति (६ ३ ३४) पुवत्त्व नास्ति समानायामाकृतो भाषितपुम्कत्वाभावात् । सपत्नीमातेति च भवति सपत्नीव शत्रुरिव मातेत्युपचारेण कर्मधारयात् ॥

## द्वन्द्वे घि । ३२ ।

कथं 'मपरापसमन्वचनिर्दुर्व्यतिसूदभिनिपर्यपय' इति मुविनीनामेकतरस्य पूर्वनिपातसम्भवात् । उच्यते । 'लक्षणहेत्वो क्रियाया' (३-२ १२६) इति 'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोरि'ति च ज्ञापकादनित्यमिदम् ॥

## अल्पाच्तरम् । ३४ ।

कथं 'साधारणो भूषणभूष्यभाव' इति कुमार । उच्यते । 'पूरणार्धाट्ठन्' (५-१-४८) 'परिव्यवेभ्य क्रिय' (१ ३ १८) इति ज्ञापकादस्यानित्यत्वात् । कथं शिष्योपाध्याय छात्रोपाध्यायमिति 'अध्ययनतोऽविप्रकृष्टाख्यानाम्' (२ ४ ५) इत्यत्र रक्षितेनोदाहृतम् 'अभ्यर्हित चे'ति पूर्वनिपातात् । उच्यते । 'लक्षणहेत्वो क्रियाया' (३ २-१२६) इति ज्ञापकात् सामान्येन प्रकरणानित्यत्व 'ड्याप्' (४ १-१) सूत्रे रक्षितेनोक्तम् । एवञ्च पार्वतीपरमेश्वराविति । अथवा प्रयोक्रपेक्षया अभ्यर्हितत्व *प्राह 'भ्रातुश्च ज्यायस' इति वार्तिकारम्भात् । इह तु कवेश्चाण्डत्वादेव देवी अभ्य* र्हिता । पितामातराविति न भवति । 'गर्भधारणपोषाभ्या ततो माता गरीयसी'ति स्मृते र्हि माता सर्वेपामभ्यर्हिता । अन्ये त्वाहु । पार्वतीं पातीति पार्वतीप शिव । 'रमा जलधिजा देवी'ति त्रिकाण्डशेष । रमाया ईश्वरो रमेश्वर विष्णु तो वन्द इत्यर्थ ॥

## सप्तमीविशेषणे बहुव्रीहौ । ३५ ।

कथं 'शान्त्युदकुम्भहस्ता यायावरा पुष्पफलेन चान्ये' । तथा 'राना जिहच मधुपर्कपाणि' इति भट्टि । शान्त्युदकुम्भो हस्ते येषा, तथा मधुपर्का पाणौ यस्येति बहुव्रीहिरिति जयमङ्गला । कथ वज्रपाणि कमण्डलुपाणिश्चक्र§पाणे ।

---

१ पदमजरी तु वार्तिकसूत्रिकमिति वृत्तिपाठ मत्वा वृत्तौ साधु वार्त्तिक तथाद' सूत्र च वार्तिकसूत्रमिति कर्मधारयाद्गित्याह

§ 'हस्त सूप' इति कपुस्तके पाठ

उच्यते। आहिताग्न्यादिषु द्रष्टव्यः। तद्गणपाठस्यातन्त्रत्वात् व्यवस्थित-विभाषात्वाच्च नित्य एव परनिपातः। एतदेवोच्यते 'प्रहरणार्थेभ्यो निष्ठासप्तम्यौ परे भवत' इति 'जातिकालसुखादिभ्यः परवचनमि'त्यादि। एवं च 'यदक्षपादः प्रवरो मुनीनामि'त्यत्र पादे अ(क्ष* क्षम्) अस्येति बहुव्रीहौ 'गड्वादिभ्यः परवचनम्' इति पादस्य परप्रयोगः॥

## निष्ठा ॥ ३६ ॥

कथमल्पश्रुतबहुश्रुतौ। उच्यते। 'सर्वनामसङ्ख्ययोरुपसङ्ख्यानम्' इति वचनात् 'प्रथमचरमे'त्यादिना (१-१-३३) अल्पशब्दस्य सर्वनामत्वम्। 'बहुगणवतुडति सङ्ख्ये'(१-१ २३)ति बहुशब्दस्य सङ्ख्यात्वम्। आहिताग्न्यादित्वाद्वा॥

इति शरणदेवविरचितदुर्घटवृत्तौ

**द्वितीयाध्याये द्वितीयः पादः।**

---

## अथ तृतीयः पादः।

## अनभिहिते। १।

## कर्मणि द्वितीया। २।

**कथं** 'हा पितः क्वासि हे सुभ्रु' इति भट्टिः, 'हा तात हा अम्बे'ति मालतीवाक्यं, 'हायोगेऽपि दृश्यते' इति द्वितीयासम्भवात्। उच्यते। हाशब्दोऽयं शोकवचनः। तेन कान्तारे *पित्रादि सम्बोध्यते। तत्र सम्बोधनप्रथमाया प्राप्तायामस्यारम्भे हि अपिशब्दस्य व्यभिचारार्थत्वात् सम्बोधने प्रथमापि भवति। 'आबाधे च' (८-१-१०) इति न द्वित्वमाबाधस्य हाशब्देनैवोक्तत्वादिति रक्षितः। किन्त्वेवं 'हाहा गिरो निष्फलाः' इति। तस्माच्छोकपूर्वकसम्बोधनवचनो हाशब्दः। हाहा गिर इत्यत्र तु शोकार्थ एव सम्बोध्यस्याभावात्। अतोऽत्र द्वित्वम्। भागवृत्तिकृत्त्वाह—"शोच्यशोचकसम्बन्धे षष्ठ्यपवादो द्वितीया। सम्बोधने तु 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी'ति प्रथमा। "पुष्पितान्ते सुगन्धा।

आयाते चैत्रमासे दिशि दिशि रुचिरं श्रूयते कोकिलाना
हा कष्टं किं करोमि प्रियतमविरहे कामदूतो वसन्त"

---

* 'तरुशिखादि' इति पुस्तके पाठः

कथं 'कां दिशं गन्तव्यामि'ति कादम्बरी । 'सभां वा न प्रवेष्टव्यं वक्तव्यं वा समञ्जसम् । अब्रुवन् विब्रुवन् वापि नरो भवति किल्बिषी' इति गम्यादेः सकर्मकत्वात् कर्मणि तव्यस्य विधानेऽभिहितत्वात् कर्मणि द्वितीया न स्यात् । उच्यते । पदसंस्कारे कर्मणोऽविवक्षायां भावे तव्यप्रत्ययः । उत्तरकालं कर्मसम्बन्धे द्वितीयेति कश्चित् । तन्न, षष्ठीप्रसङ्गात् । तस्मादुद्दिश्येत्यध्याहार्यम् । तत्कर्मेदम् । अथवा 'गत्यर्थकर्मणि' (२-३-१२) इति द्वितीयाग्रहणात् षष्ठीं बाधित्वा द्वितीया । 'तदर्हमि' (५-१-११७) ति निर्देशात् 'कर्तृकर्मणोः कृति' (२-३-६५) ति बाधितत्वाद्वा । एवं 'श्रान्तं देशमनेकदुर्गविषममि'ति च । अत्रापि 'नपुंसके भावे क्तस्योपसङ्ख्यानमि'ति षष्ठी स्यात् । अपि तु शेषषष्ठ्या ह्यत्र प्रत्याख्यातत्वाच्छेषविवक्षायां न षष्ठीत्युच्यते । तदभावे (+ + + पु धार्ये तत् ?) सिध्यति । अध्वविवक्षायां 'कालाध्वनोरि'ति (२-३-५) वा द्वितीया । कथम् 'उपर्युपरि बुद्धीनां चरन्तीश्वरबुद्धयः' इति जातकमाला । उपरिबुद्धीनामुपरिबुद्धीनामुपरि चरन्तीत्यर्थः । एवं चाम्रेडितत्वाभावान्न द्वितीया । यद्वा प्रतिपदोक्तस्य 'उपर्यध्यधसस्सामीप्ये' (८-१-७) इति कृतद्वित्वस्य ग्रहणम् । अत्र वीप्सायां द्विर्वचनं कार्यम् । कथम् चैत्रं यावच्छीतम् । उच्यते । 'ततोऽन्यत्रापि दृश्यते' इति दृशिग्रहणस्य प्रयोगानुसारित्वाद् यथा 'बुभुक्षितं न प्रतिभाति किञ्चिदि' त्यत्र प्रतिभातियोगे द्वितीया तथा यावच्छब्दयोगे च । एवं 'पुरुषाराधनमृते' इति महिम्नःप्रयोगः । 'ऋतेयोगे द्वितीये'ति कश्चित् । तन्न । 'अन्यारादितरर्ते' (२-३-२९) इति प्रतिपदपञ्चमीबाधकहेतोरदर्शनात् । तस्माद् 'द्वितीये'ति योगविभागः कर्तव्यः ऋतेयोगे द्वितीयार्थम् । तथा च चान्द्रे सूत्रं—'ऋते द्वितीया चेति' । कथं 'एसमातं ङितं विद्याद्वाक्यस्मरणयोरङिदि'ति, विद्यादिति क्रियायोगापेक्षया अङितमिति स्यात् । उच्यते । नास्य विद्यादित्यनेन सम्बन्धः । किन्तु भवतीत्यध्याहार्यम् । कथं (विमतो दिवसात् तास्तास्तनश्रीः पूर्वं भवान् घरासीदिति । उच्यते 'कालभावाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणामि'ति कर्मत्वम् । तदर्थं यत्नः कर्तव्य इति उच्यते । सामान्योपक्रमेण विशेषाभिधानात् प्रथमा । 'प्राप्य' इति वाध्याहार्यम् ?) 'विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसाम्प्रतमि'ति कुमारः । 'क्रमादमु नारद इत्यबोधि सः' इति माघः । उच्यते । सम्प्रति भवं साम्प्रतं न साम्प्रतमसाम्प्रतमिति तद्धितान्तमव्ययम् । तथेतिशब्दः कृदन्ताव्ययम् । ततश्च कृत्तद्धिताभ्यामभिहितत्वान्न द्वितीया । अव्ययेनाभिहितेऽपि न द्वितीया, 'कृत्तद्धितसमासैः परिसङ्ख्यानमि'त्यस्य सम्भवप्रदर्शनार्थत्वादिति रक्षितः । कथं तर्ह्यधिसिमस्तावे

न्यासकृत् परिगणनं स्वीकृतवान् । उच्यते । अभ्युपगम्योक्तं तत् । उपलक्षणे अधिशब्देनोक्ते आधारे सप्तमी,शौण्डादिगणे अन्तश्शब्दस्याधिकरणप्रधानस्योपादानाद् ज्ञापकात् । कथं तर्हि 'यदन्त्यपर्णामिति तां पुराविद' इति कुमारः, इतिशब्देनोक्तत्वात् । उच्यते । पुराविद इत्यस्मादनन्तरमितिशब्दो द्रष्टव्यः । कथं 'स तैराक्रमयामास शुद्धान्तं शुद्धकर्मभिरि'ति कुमारः, क्रमेर्गत्यर्थत्वाद् 'गतिबुद्धी'त्यादिना (१-४-५२) कर्मत्वात् तानिति युक्तम् । अत्र क्रमिरवष्टम्भे वर्तते, न गतौ । कथं ('चटेचटे वैश्रवण ? शुकवत् पश्यसे मये'ति पठनक्रियाव्यापकत्वेन कर्मत्वात् ?) तथा 'मन्ये धातुर्विभापित' इति मननक्रियाव्याप्यमानत्वात् कर्मणि द्वितीया स्यात् । वाक्यार्थस्य कर्मत्वात् । द्वितीया हि ङयाप्प्रातिपदिकाद्विधीयते । कथं 'वक्ष्यति कर्मणि द्वितीया' इति वृत्तिः, इतिशब्दाप्रयोगात् । उच्यते । अनुकार्यानुकरणयोरभेदविवक्षायामर्थवत्त्वाभावात् । कथं पक्त्वौदनो भुज्यते, पचिक्रियायां कर्मणोऽनभिहितत्वे द्वितीयाप्रसङ्गात् । उच्यते । प्राधान्याद्भुजिक्रियापेक्षया अभिहितकर्मत्वात् । एवं च ग्रामो गन्तुमिष्यते, पच्यते ओदनो भोक्तुमित्यादि सेत्स्यति । 'ततोऽनुकुर्याद्विशदस्य तस्यास्ताम्रोष्ठपर्यस्तरुचः स्मितस्ये'ति कुमारः । उच्यते । 'माषाणामश्नीयादि'तिवत् शेषविवक्षायां षष्ठी ॥

## अन्तरान्तरेणयुक्ते । ४ ।

कथम् 'आवयोरन्तरा वेदिरि'ति, अन्तरायोगे द्वितीयाप्रसङ्गात् । उच्यते । सावधारणावधिमध्यत्वे द्वितीया कृता । एवं 'त्वां च मां नान्तरा कमण्डलुरि'ति । नकार एवार्थ इत्यनुन्यासः । एतच्च पूर्वसूत्राच्चकारानुवृत्तेः । यद्येवं 'वैदेहीमन्तरा क्रुद्ध' इति भट्टिः । उच्यते । केचिद्विशेषेण मध्यमिच्छन्ति ॥

## गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि । १२ ।

कथं 'महोपकारस्य किमस्ति तस्य तुच्छेन यानेन वनस्य मोक्ष' इति भट्टिः । यतश्चतुर्थी चेति वक्तव्ये द्वितीयाग्रहणं परामपि कृद्योगषष्ठीं बाधितुमिति न षष्ठीसम्भवः । उच्यते । प्रार्थनादिक्रियाव्याप्यमानत्वाद् गमनादेः कर्मत्वे क्रियाकर्मणाऽभिप्रेयमाणस्य ग्रामादेः सम्प्रदानत्वे चतुर्थी । प्रार्थनादिक्रियाया अभेदे गमनादेरकर्मत्वे गमनक्रियाव्याप्यमानत्वाद् ग्रामादेः कर्मत्वे द्वितीयेति सूत्रं भाष्ये प्रत्याख्यातम् । एवं च सामर्थ्याभावात् कृद्योगषष्ठ्यस्त्येव । न चैतद्दर्शने अजां

१. केचिदिति । अस्मिन् पक्षे आवयोरन्तरेत्यन्तराशब्दस्याव्ययस्य मध्यवर्तिवचनो बोद्धव्यः ।

नयति ग्राममित्यादौ सम्प्रदानत्वमनभिधानात् । शोभनं ग्रामं गच्छतीत्यत्र युगपद्भेदाभेदविवक्षायां भेदे क्रियायाः कर्मत्व(म)भेदे ग्रामस्येति न दोषः । (पूर्ववृत्तिदशवृत्तिकृतोक्तं । तदपि प्रमाणयति?) तथा च भट्टिः 'तस्याभिगमनाये'ति । शेषविवक्षायां षष्ठीति पुरुषोत्तमः ॥

## चतुर्थी सम्प्रदाने । १३ ।

कथं 'कामस्यास्य विवेकशून्यमनसो मा देहि मुग्धे! बलिम्' इति । सम्प्रदानमिति चतुर्थ्या भाव्यम् । उच्यते । शेषविवक्षायां षष्ठी । कथं 'कुर्वन्ति हितमात्मनः', तथा 'रोगिणां हितमौषधम्' इति वैद्यकशास्त्रम् । 'प्रामाद्यद् गुणिनां हिते' इति भट्टिः, 'हितयोगे चतुर्थी वक्तव्ये'ति वचनात् । उच्यते । 'हितं भक्षाः' (४-४-६५) इत्यत्र 'तदस्य पण्यमि'त्यतोऽस्येत्यनुवृत्तिर्ज्ञापयति हितयोगे शेषषष्ठ्यपीष्यते । न चास्येत्यस्य चतुर्थ्यन्ततया विपरिणामः कर्तव्यः । एवं च 'तदस्मै दीयते नियुक्तम्' (४-४-६६) इत्यत्रास्मैग्रहणमिहैव कृतं स्यादिति रक्षितः ॥

## नमःस्वस्तिस्वाहास्वधालंवषड्योगाच्च । १६ ।

कथम् 'इन्दुना प्रविभज्यन्ते नमस्कृत्य मुनित्रयम्' इति, नमोयोगे चतुर्थीसम्भवात् । उच्यते । करोतिरत्र क्रियासामान्यवचनत्वात् प्रणतिवचनः । नमश्शब्दस्तु तद्द्योतकः । अत एव द्योत्यद्योतकसम्बन्धे 'साक्षात्प्रभृतीनि च' (१-४-७४) इति गतित्वाद् 'नमस्पुरसोर्गत्योः' (८-३-४०) इति सत्वम् । एवञ्च नमस्यत्वान्मुनित्रयस्य कर्मत्वे 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी'ति द्वितीया । एवञ्च 'प्रणम्य शितिकण्ठाय' इति कुमारचरितं न घटते । उच्यते । कर्मणां शेषत्वे मापाणामश्नीयादिति षष्ठीप्रसङ्गे 'नमस्स्वस्ती'ति (२-३-१६) चतुर्थी । 'क्रियाग्रहणं कर्तव्यमि'ति वा । प्रणम्येति विभक्तिप्रतिरूपको निपातो नमःपर्यायो वा । यदा तु नमोऽर्थ एव करोतिक्रियया व्याप्यमानस्तदा नमसो योगे चतुर्थी । गतित्वं च नास्ति, द्योतकसम्बन्धाभावात् । तथा च भट्टिः । 'रावणाय नमस्कुर्याः स्यात्सीते स्वस्ति ते ध्रुवमि'ति । तथा 'नमश्चकार देवेभ्यः पर्णशालां मुमोच चे'ति

---

१. शोभनमिति क्रियाविशेषणम्. २. क्रियाया गमनक्रियाया. ३. कर्मत्वमिति तद्धि गम्यमानप्रार्थनादिक्रियापेक्ष क्रियागत तद्विशेषणेऽपि भविष्यति. ४. ग्रामस्येति कर्मत्वमित्यनुषज्यते.

राक्षितः । कथं 'ममायं प्रभुः' प्रभुर्मल्लो मल्लायेतिवद् 'अलमिति पर्याप्त्यर्थस्य ग्रहणमि'ति चतुर्थ्या भाव्यम् । उच्यते । भाष्येऽत्र द्विधा व्याख्यातम्—अलमिति पर्याप्त्यर्थस्य ग्रहणमिति । इहापि यथा स्यात् प्रभुर्मल्लो मल्लायेति । अलमिति पर्याप्त्यर्थस्य स्वरूपस्य च ग्रहणम् । इह मा भूदलं बालो रोदनेनेति । एवं चैकस्य मते प्रभ्वादियोगे षष्ठी, अन्यस्य चतुर्थी । सूत्रकृतापि स्वीकृतमिदं 'तस्मै प्रभवति सन्तापादिभ्यः' (५-१-१०१) 'स एषां ग्रामणीः' (५-२-७८) इति निर्देशाभ्याम् । तथा च भट्टिः । 'नामोथीदस्य कश्चन' । 'पुप्रोथास्मै न कश्चन' । 'प्रोथृ पर्याप्ता'वि'त्यस्य रूपम् ॥

## कर्तृकरणयोस्तृतीया । १८ ।

'नीरन्ध्रे गतवति सक्षयं पृषत्कैर्भूतानामधिपतिना शिलावितानें' इति भारविः । यतोऽधिपतेः कर्तृत्वकरणत्वे न स्तः, क्तवतोः कर्तरि विधानात्, पृषत्कानां च करणत्वात्; गमेर्ण्यर्थत्वे अधिपतिरेवोक्तः स्यात् क्तवतुना । उच्यते । हेतौ तृतीया द्रष्टव्या । कथम् 'एकाकिना न गन्तव्यं यदि कार्यशतैरपि' । [..... .... कर्कटपात्रेणेति पशुरिव पशुः । यद्वा । पशुकर्कटमात्रेणेति वा पाठः । तत्र पशुं पश्येत्यर्थः कारकसहितः सर्वः कारकसङ्घः ?] कथं 'धनपतिगृहादुत्तरेणास्मदीयमि'ति मेघः । उच्यते । उत्तरेणेति विभक्तिप्रतिरूपको निपातः । 'प्रकृत्यादिभ्य उपसङ्ख्यानमि'ति तृतीया । एकमुनिपक्षे उत्तरेण पथा गत्वेत्यर्थः । एवं च करणे तृतीया । एनप्प्रत्यये तु 'एनपा द्वितीया' (२-३-३१) इति धनपतिगृहशब्दाद् द्वितीया स्यात् । कथम् 'उच्चारणार्थवर्णान्तर्भावेन भक्तिरि'ति कुटादिसूत्रे राक्षितः । उच्यते । प्रकृत्यादित्वादित्येव । 'इत्थम्भूतलक्षणे' (२-३-२१) इति वा । कथं प्रभूयते भृत्यः । उच्यते । प्रभुरिवाचरतीति क्यङ् । कथं 'ग्रामं गन्तुमुपक्रम्यते देवदत्तः' । उच्यते । 'प्रोपाभ्यां समर्थाभ्याम्' (१-३-४२) इति कर्तरि तङ् । 'वा भ्राशे'ति (३-१-७०) वा श्यन् ॥

## सहयुक्तेऽप्रधाने । १९ ।

कथं 'प्रासोष्ट शत्रुघ्नमुदारचेष्टमेका सुमित्रा सह लक्ष्मणेन' लक्ष्मणस्य ज्येष्ठत्वादप्राधान्यमयुक्तत्वात् । उच्यते । यस्य क्रियाभिसम्बन्धः शब्देन प्रतिपाद्यते, तस्य प्राधान्यं तत्रोक्तम् । 'यस्मिन् जाते माभूतेति व्यपदेशस्तस्य क्रियाभिसम्ब-

न्धात् प्राधान्यात् शत्रुघ्ने कनीयसि प्रसूते तथा व्यवहारात् तस्य प्राधान्यमि'ति जयमङ्गला । एवञ्च 'शशिना सह याति कौमुदी सह मेघेन तडित्प्रलीयत' इति कुमारः । तथोपाध्यायेन सहागताश्छात्रा इति सिध्यति ॥

## विभाषा गुणेऽस्त्रियाम् । २५ ।

कथम् 'इह भूतले घटो नास्त्यनुपलब्धेः', अस्त्रियामिति निषेधात् । उच्यते । 'अनुपलब्धेरि'ति भाष्यकारवचनप्रामाण्याद् 'विभाषा गुणे' इत्यनुन्यासः । अथ वा बुद्धिरुपलब्धिर्ज्ञानमिति अभिन्नार्थाः साङ्ख्यदर्शने । एवञ्चा(बुध्य ? विद्य)माना उपलब्धिर्यस्मिन् ज्ञानविशेष इति बहुव्रीहिः । 'विभाषा गुण इति योगविभागाद्' इति 'उणादयो बहुलम्' (३-३-१) इत्यत्र 'प्रकृतेस्त्वनुद्दृष्टेरि'ति सिद्धये न्यासः ॥

## अपादाने पञ्चमी । २८ ।

कथं 'कटकान्महाबाणकं सम्पातयती'ति लेखमालिका । 'ल्यब्लोपे कर्मण्युपसङ्ख्यानमि'ति पञ्चमी । कटकमास्थायेत्यर्थः । कथं गृहादारभ्य (भ ? ह)ट्ट यावदिति । तथा 'कुट कौटिल्य इत्यत आरभ्य कुड् शब्द इति यावदि'ति वृत्तिः । उच्यते । प्रभृतिपर्यायोऽयमारभ्यशब्दो निपातः । ततश्च कार्त्तिक्याः प्रभृतीति भाष्यकारवचनप्रामाण्यात् पञ्चमी । यद्वा आरभ्यशब्दो ल्यबन्तः । ततो द्वितीयान्ताद् 'आद्यादिभ्यस्तसुपसङ्ख्यानम्' इति तसिः । कथं विंशतेरधिको द्रोणः । अधिकसम्बन्धे षष्ठ्या भाव्यम् । उच्यते । 'यस्मादधिकमिति' (२-३-९) निर्देशादिति रक्षितः । कथं 'जीर्णमन्नं प्रशंसीयाद् भार्यां च गतयौवनाम् । रणे प्रत्यागतं शत्रुं सस्यं च गृहमागतम्' । रणादिति युक्तम् । उच्यते । अपादानस्याविवक्षायां सप्तमी 'यस्य च भावेने'ति (२-३-३७) । कथं प्रशसीयात्, शंसु धातोर्लिङि प्रशंस्यादिति स्यात् । प्रशंसीत्यावश्यके णिनिः । प्रशंसाशब्दाद् व्रीह्यादित्वाद्वा इनिः । इयादिति इणो लिङि रूपम् । 'यदि *नाम कुतो मदस्तत् किमर्थं दरिद्रता । दारिद्र्यादतिमूर्खत्वमहो दुःखपरम्परा' । दारिद्र्या(दुक्तम ? दित्य)युक्ता पञ्चमी, हेतोरभावात् । उच्यते । ल्यब्लोपे पञ्चमी भविष्यति ॥

## अन्यारादितरर्तेदिक्छब्दाञ्चूत्तरपदाजाहियुक्ते । २९ ।

* 'नामाऽऽतोन्मत्तः' क्पुस्तके पाठः.

कथं पूर्वं कायस्येति । उच्यते । 'तस्य परमाम्रेडितम् (८-१-२) इति निर्देशादवयववाचिना दिक्छब्देन योगे पञ्चम्यभाव इति रक्षितः । कथं 'समुदायिभ्योऽनन्यः समुदायः' । ग्रहणवता प्रातिपदिकेन तदन्तविध्यभावाद् । उच्यते । अन्य इत्यर्थग्रहणम् । नञ्समासस्योत्तरपदार्थप्रधानत्वात् तदर्थयोगोऽनुपहत इति रक्षितः ।

## पष्ठ्यतसर्थप्रत्ययेन । ३० ।

कथं 'प्रातिपदिकात् परतः' । उच्यते । नायं 'विभाषा परावराभ्यामतसुच्' (५-३-२९) इत्यतसुजन्तः । कथं तर्हि, परशब्दात् सप्तम्यर्थे आद्यादित्वात् तसिः ॥

## सप्तम्यधिकरणे च । ३६ ।

कथं 'दात्रेण धान्यं लुनाती'ति । उच्यते । निमित्तमिह प्रयोजनमभीष्ट, संयोगश्च संश्लेष इति रक्षितः । यद्येवं यूपाय दार्वानय । इह हि यूपः प्रयोजनं दारुणा संश्लेषोऽस्य । उच्यते । तादर्थ्यविवक्षायां चतुर्थी । कथम् 'अन्तर्धौ येनादर्शनमिच्छतीत्यन्तर्धाविति निमित्तसप्तमी'ति न्यासः । उच्यते । अत एव निर्देशान्निमित्तमात्रे सम्बन्धमात्रे वा सप्तमीति रक्षितः । कथं 'जन्मजन्म यदभ्यस्तं दानमध्ययनं तपः' । जन्मनीति युज्यते । उच्यते । जन्मसहचरिते काले जन्मशब्दस्य वृत्तेः 'कालाध्वनोः' (२-३-५) इति द्वितीया । कथं (वाग्वाकः फलेतः पतति[1]) शयानेन भुक्तमिति । शयनक्रियया भोजनक्रिया लक्ष्यते । उच्यते । चिन्त्यम् अनभिधानादिति रक्षितभाषावृत्ती ॥

## प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा । ४६ ।

कथं 'वृक्षोऽस्मि'ति क्रियाया अभावे कारकत्वाभावादनभिहितत्वाच्च । उच्यते । कारकत्वमभिहितत्वं चेति भागवृत्तिः । कथं 'मञ्चाः क्रोशन्ती'ति गौणे प्रथमा । यथा द्रोणपरिमितो द्रोण इत्यत्र परिमाणसव्यपेक्षत्वान्मात्रग्रहणान्न प्राप्नोतीति परिमाणग्रहणं, तथात्राप्युपचारापेक्षत्वान्न स्यात् । उच्यते । 'वर्णो वर्णेन' (२-१-६९) इति पर्ष्ठो उपचारसव्यपेक्षेऽपि प्रथमा । कथं 'यस्य तस्य प्रसूतस्य गुणवान् स्पूर्जितो नर' इति प्रसूतस्येत्यत्र हि प्रथमा युक्ता । उच्यते । प्रसूतः स इत्येव पाठः ॥

---

१. [illegible] 'निमित्तात् कर्मसंयोगे' इत्यत्रेत्यर्थः । दात्रं तु न प्रयोजनम्, किन्तु करण[illegible]मिति भावः

## षष्ठी शेषे । ५० ।

कथं 'तदस्मिन्नधिकम्' (५-२-४५) इति । निर्देशादेवेति रक्षितः । 'अबाधकान्यपि निपातनानि भवन्ती'ति वचनात् 'सङ्ख्ययाव्ययासन्ने' (२-२-२५) इत्यत्राधिकं दशानामित्यत्रोक्ता षष्ठी ॥

## कर्तृकर्मणोः कृति । ६५ ।

कथं 'रक्षोगणं क्षिप्नुमविक्षतात्मा' । तथा धायैरामोदमुत्तममि'ति भट्टिः । उच्यते । 'तदर्हमि'(५-१-१७)ति शाश्वकादस्यानित्यत्वाद् द्वितीया । धायैरिति 'धेट् पाने' 'श्याद्व्यधास्रु' (३-१-१४१) इत्यादिना णः । युक् । ततस्तृतीयेति रक्षितः । कथं 'कृतपूर्वी कटम्' अनभिहिते कर्तरि कृत्प्रयोगे षष्ठीप्रसङ्गात् । उच्यते । कृद्ग्रहणं न तिङ्व्यावृत्त्यर्थं द्वितीयाविधानसामर्थ्यात् । ततस्तद्धितव्यावृत्त्यर्थमिति तद्धितप्रयोगे न षष्ठी ॥

## उभयप्राप्तौ कर्मणि । ६६ ।

कथम् 'अङः किना बाधा भवती'ति 'स्थागापापचो भावे' (३-३-९५) इत्यत्र वृत्तिः । तथा 'सुटा सीयुटो बाधा मा भूदि'ति 'सुट्तिथोः' (३-४-१०७) इत्यत्र वृत्तिः । 'अकाकारयोः प्रतिषेधो वक्तव्य' इति नियमनिषेधात् 'कर्तृकर्मणोः' (२-३-६५) इति षष्ठ्या भवितव्यम् । उच्यते । 'अ प्रत्ययात्' (३-३-१०२) इत्यग्रहणस्यात्र प्रश्लेषाद् (²) ग्रहणमिति रक्षितः । बाधाशब्दे 'गुरोश्च हलः' (३-३-१०३) इत्यकारः ॥

## क्तस्य च वर्तमाने । ६७ ।

कथं 'त्वया रक्षितो' 'यत्र मीलित' इति । 'मतिबुद्धिपूजार्थेभ्यश्च' (३–२-१८८) इत्यत्र चकारेण 'शीलितो रक्षितः क्षान्त' इत्यादेः संग्रहादनेन षष्ठ्या भाव्यम् । उच्यते । भूते क्तान्तस्यायं प्रयोगः । भागवृत्तिकृता तु (पक्ष्मामूलत्यपान्तनमीपाते?) । (म? त)स्मतेन शेषविवक्षायां षष्ठ्यत्र द्रष्टव्या । कथं 'दोषाणां विवर्जितम्' । दोषैरिति स्यात् । उच्यते । 'नपुंसके भावे क्तस्योपसङ्ख्यानमि'ति षष्ठी छात्रस्य हासितमितिवत् । यदि कर्मणि निष्ठा तदा शेषलक्षणैव षष्ठी । दोषाणां सम्बन्धि यद् विवर्जितमित्यनुन्यासः ॥

---

१. मा भूत् इत्यस्य स्थाने 'न भवति' इति शब्दकौस्तुभगत एतत्प्रयोगानुवादे पठ्यते.

२. 'प्रश्लेषात्' इत्यस्य स्थाने 'प्राधान्याद्' इति स्यात् । तथैव च कौस्तुभगते रक्षिताभिप्रायानुवादे दृश्यते.

## न लोकाव्ययनिष्ठाखलर्थतृनाम् । ६९ ।

कथं 'सत्यानुरक्तं नरकस्य जिष्णवः' इति । उकारान्तग्रहणात् षष्ठीनिषेधात् । उच्यते । शेषविवक्षायां षष्ठी ॥

## तुल्यार्थैरतुलोपमाभ्यां तृतीयान्यतरस्याम् । ७२ ।

कथं 'स्फुटोपमं भूतिसितेन शम्भुने'ति माघः, येनोपमा भवति तस्योपमानस्य तृतीयाया 'अतुलोपमाभ्यामि'ति निषेधात् । उच्यते । सहविवक्षायां तृतीया । सूत्रं तु षष्ठ्यर्थे सहभावाविवक्षार्थं च । शम्भुनेत्यत्र तु तुल्यार्थस्याप्राधान्याच्च न प्रतिषेधः ॥

## चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः । ७३ ।

कथं नित्यं 'गोभ्यः स्वस्ति भूयादि'ति । उच्यते । 'नमस्स्वस्ती'(२-३-१६) त्यादौ चकारस्तस्यैव वाक्यस्य समुच्चयार्थः । तेनाशीर्विवक्षायां षष्ठ्या बाधितत्वाच्चतुर्थीति वृत्तिः ॥

इति शरणदेवविरचितदुर्घटवृत्तौ

द्वितीयाध्याये तृतीयः पादः ।

---

### अथ चतुर्थः पादः ।

## द्विगुरेकवचनम् । १ ।

कथं 'रुद्रैकादशी'ति हरिश्चन्द्रप्रयोगः । समाहारद्विगावेकादशरुद्रामिति स्यात् । उच्यते । 'स्तोमे डड्वक्तव्य' इति 'प्रमाणे द्वयसज्' (५-२-३७) इत्यत्र वाच्यम् । रुद्रस्य पूर्वनिपातार्थं राजदन्तादिः कल्पनीयः । एवं च षोडशीत्यादि । कथं 'पञ्चपूल्य इमाः' । उच्यते । एकशेषो भविष्यतीति रक्षितः । कथमेकपूली । उच्यते । एकस्मिन्नेव समारोपितबहुत्वादिति रक्षितः । कथं 'चतुर्दिशीमिषोदयः' । उच्यते । 'दिशा वाचा गिरा क्षुधे'त्यजादिपाठात् हलन्तात् टापि । दिशाशब्देन द्विगौ 'आबन्तो वा' इति पक्षे नपुंसकत्वेन नपुंसकह्रस्वत्वे (चतुर्दिशमिति) रूपम् । अन्यत्र पक्षे समुदायिभ्योऽन्यः समुदाय इति दर्शने एकत्वाभावेऽपि 'द्विगोरि' (४-१-२१)ति ङीप् । चतुर्दिशीति रूपमिति पञ्चगुमस्ताबे रक्षितः ।

'चतुर्दिशीशानवमत्य मानिनी' इति कुमारः । हलन्तस्य दिक्छब्दस्य द्विगौ चतुर्दिगीशानिति वा पाठः ॥

## द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम् । २ ।

कथं 'ग्रीवाकुक्षिललाटेषु नित्यं स्वेदः मशस्यते' । तथा 'मुखनासिकाभ्यां यो वायुर्निष्क्रामती'ति । उच्यते । दधिपयआदेराकृतिगणत्वादिति रक्षितः । 'नासिकास्तनयोर्ध्माधेटोः' (३-२-२९) इति निर्देशादनित्यत्वाद्वा । एकशेषेण वा । शाकपार्थिवादित्वाद्वा । नासिकाया विवरभेदाद् द्वित्वात् । ललाटस्य जात्यपेक्षया बहुवचनम् । एवञ्च 'चञ्चुचरणैर्लोहितैः सिता' इत्यमरः । तथा 'पातितै रथनागाश्वैरि'ति चण्डी, 'दन्तमुष्टितलैरि'ति च । साध्यामेदा'ज्जातिरि'त्यस्य परत्वमनभिसन्धायोक्तमस्माभिः । अत्र तु प्रकारान्तरं 'दन्तमुष्टितलैरि'ति दन्तनिर्मितच्छुरिकामुष्टिः । केचिद् 'दन्तमुष्टितलैरि'ति क्तान्तं पठन्ति दन्तमुष्टतलैरिति ॥

## अध्ययनतोऽविप्रकृष्टाख्यानाम् । ५ ।

कथं 'छात्रोपाध्यायम्' । नात्राध्ययनमिति कर्मसाधने ग्रन्थकृता प्रत्यासत्तिरिति रक्षितः । सम्बन्धाभ्यर्हितत्वादुपाध्यायस्य पूर्वनिपातो युक्तः । उच्यते । पूर्वनिपातप्रकरणस्यानित्यत्वादित्युक्तं प्राक् ॥

## जातिरप्राणिनाम् । ६ ।

कथं 'राजिता नु विविधास्तरुशैलाः' इति भारविः । उच्यते । प्रधानशैला इति शाकपार्थिवादिः ॥

## येषां च विरोधः शाश्वतिकः । ९ ।

कथं 'देवासुरैरमृतमम्बुनिधिर्ममन्थे' इति भारविः । उच्यते । देवानामसुराणां च कादाचित्को विरोध इति रक्षितः । यत्र द्वन्द्वो विरोधमाचष्टे स विरोधविषयः । न चात्र द्वन्द्वो विरोधमाचष्टे सामञ्जस्यात् ॥

## स नपुंसकम् । १७ ।

कथं 'स्वमोदयशनी मायाकारः न तु (?) गिरिसागरविहार' इति समाहारद्वन्द्वे क्लीबत्वप्रसङ्गात् । उच्यते । सग्रहणं प्रसिद्ध्युपसङ्ग्रहार्थम् । तेन' युवोरनाकौ' (७-१-१) इति न क्लीबत्वम् । (न गन्ता ?) द्वन्द्वेन विहारस्य मध्यमपद-

१. 'सागरद्वन्द्वेन' इति स्यात्.

लोपी वा समासः । नपुंसक एव वा पाठः[१]॥

## सभा राजामनुष्यपूर्वा । २३ ।

कथं 'नृपतिसभामगमन्न वेपमाना' इति कीचकवधे । नृपतिरिति राजपर्यायनिवद् , न राजपर्याय इति रक्षितः । यद्वा नृणां पतिर्यस्यां सभायामिति बहुव्रीहौ कर्मधारयः । एवं 'अज्ञानञ्कर्मधारय' इत्यनुवृत्तेर्न क्लीबत्वम् ॥

## परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः । २६ ।

कथं 'गृहस्थूणं, शशोर्णम्' इति वररुचिलिङ्गकारिका, अमरलिङ्गसंग्रहश्च । अनेन परवल्लिङ्गता स्यात् । उच्यते । 'असिद्धवदत्राभादि'(६-४-२२)तिवत् परवल्लिङ्गमिति वतिनिर्देशो व्यभिचारार्थः । लोकाश्रयत्वाद्वा क्लीबत्वम् । तथा च भाष्यं— 'गृहशशपूर्वयोः स्थूणोर्णयोर्नपुंसकत्वम्' इति (अटवर्मित्रशत्रुम् !) ॥

## रात्राह्नाहाः पुंसि । २९ ।

कथं 'गणरात्रं निशा बह्वयः' इत्यमरः । 'अच्प्रत्यन्ववपूर्वात् सामलोम्नः' (५-४-७५) इत्यत्राजिति सोमनन्दी । अत्रानेन पुंस्त्वं स्यात् । उच्यते । गणशब्दोऽयं बहुत्ववाची समूहवाची न । अत्र बहुत्ववाचित्वे गणानां रात्रीणां समाहार इति समाहारे द्विगौ कृते समासे 'समासान्ता अनवयवा' इत्यस्मिन् दर्शने अकारान्तोत्तरपदत्वाभावाद् 'अकारान्तोत्तरपदो द्विगुः स्त्रियां भाष्यत' इति न स्त्रीत्वम् । 'स नपुंसकम्' (२-४-१७) इति क्लीबत्वात् पात्रादित्वाद्वा क्लीबत्वमित्यमरकोशटीका । समूहवाचित्वे तु रात्रेर्गणसमासे राजदन्तादित्वात् परप्रयोगे लोकाश्रयत्वात् क्लीबत्वं शत सहस्रं यथा । तदुक्तं— 'लिङ्गमशिष्यं लोकाश्रयत्वा-दि'ति तथा च नपुंसककाण्डे अमरः— 'रात्रं प्राक् सङ्ख्ययान्वितमि'ति। गणशब्दस्य 'बहुगणवतुडति सङ्ख्या' (१-१-२३) इति सङ्ख्यासंज्ञा । एवञ्च द्विरात्रत्रिरात्रपञ्चरात्रादीनां क्लीबत्वम् । अभिधेयलिङ्गापवादोऽयम् । तेनाह्नो निर्गतो निरह्नो चेति रक्षितः । कथं तर्हि द्वयोरह्नोर्भवा पूजा 'द्व्यह्ना पूजे'ति स्त्रीत्वम् । 'तत्पुरुषयो-रि'त्यनुवृत्तेर्द्वन्द्वसाहचर्यात् समासपदार्थाभिधेयग्रहणम् । इह तु भवार्थाभिधेयस्तत्पु-

१. शतमिति । 'शतायुतप्रयुताः पुंसि च' 'सहस्रः पुंसि' इति सत्यपि पुंस्त्वानुशासने श-समहस्त्रयोर्नपुंसकत्व एव प्रयोगो इति लिङ्गानुशासनानादरस्थाननिदर्शनमेतत्.

रुपः । न च दित्वा (त्वा? द)त्र ङीप्, 'अनुपसर्जनादि'(४-१-१४)ति प्रतिषेधात् ॥

## अपथं नपुंसकम् । ३० ।

कथम् 'अपन्थानं तु गच्छन्तं सोदरोऽपि विमुञ्चति' इति । उच्यते । समासान्तानिर्देशात् । कथं 'विपथं कदध्वा कापथः समा' इत्यमरः । 'पथः सङ्ख्याव्ययादेरि'ति क्लीबत्वात् । कुशब्दस्याव्ययस्य 'कुगतिप्रादयः' (२-२-१८) इत्यत्र गतिसाहचर्याद् ग्रहणम् । अव्ययत्वं (चः?चा) सङ्ख्या(ढि)त्वाद् 'विभक्तिस्वरप्रतिरूपकाश्चे'ति चकाराद्वेति रक्षितः । 'विपथं कदध्वा कापथं समाः, ईति वा पाठः कर्तव्यः । तथा क्लीबलिङ्गकारिका—'पथः सङ्ख्याव्ययात् परः' इति । 'लिङ्गमशिष्यं लोकाश्रयत्वादि'ति कश्चित् । 'पथ' इति कृतसमासान्तनिर्देशाद् 'अतिपन्थाः सुपन्थाश्चे'ति कोशः । अत्र समासान्तत्वं तु (न) 'न पूजनादि' (५-४-६९) ति ॥

## द्वितीयाटौस्स्वेनः । ३४ ।

कथं

> 'हे रोहिणि! त्वमसि *शीतकरस्य भार्या
> एनं निवारय पतिं सखि! दुर्विनीतम् ।
> जालान्तरेण मम वासगृहं प्रविश्य
> श्रोणीतटं स्पृशति किं कुलधर्म एषः ॥'

एनमिति न स्याद् अन्वादेशाभावात् । उच्यते । 'श्रोणीतटं स्पृशति किं कुलधर्म एष' इति योजयित्वा एनं निवारयेति योज्यम् । 'बहुवेणीं स्पृशन्नेनां कृष्णां धूमशिखामिवे'ति वेणी । अत्र एतामिति पाठः कर्तव्यः ॥

## अस्तेर्भूः । ५२ ।

'लावण्य उत्पाद्य इवास यत्न' इति कुमारः । अनेन भूभावेन भाव्यम् । उच्यते । 'अस गतिदीप्त्यादानेषु' । अस्मादुभयपदिनः । 'केचिदनुप्रयोगादन्यत्रास्तेर्भूभावं नेच्छन्ति' इति धातुप्रदीपः ॥

## ब्रुवो वचिः । ५३ ।

कथं 'प्रेष्यब्रुवोरि'(२-३-६१)ति । लाघवार्थमज इति वक्तव्ये 'अर्जी'ति

१. 'इति वा' शब्दस्थाने 'इत्येव' इति स्यात्.

* 'शीलवतीषु धन्या' क-पुस्तके पाठान्तरम्.

इका गुरुनिर्देशात् । तेन ज्ञापयत्यार्धधातुकीयं कार्यमनित्यमिति । सामान्यज्ञापकात् क्किपि न वच्यादेशः । तथा च 'विक्रतिः कटके कृता जनैः' (?) इति प्रयोगः । एतदेव 'अजेर्व्यघञपोः' (२-४-५६) इत्यत्र रक्षितेन सूचितं, ज्ञापकसमुच्चये लिखितम् ॥

## अजेर्व्यघञपोः । ५६ ।

कथं 'वीज्यते स हि संसुप्तः श्वाससाधारणानिलैः' इति कुमारः । अनेन वीभावे वीयत इति स्यात् । उच्यते । 'ईज गतिकुत्सनयोरि'त्यस्य रूपम् । एवं (वीक्षित ?)वातवीजनैरि'ति च ॥

## वा यौ । ५७ ।

कथं 'पवित्रं व्यजनमि'त्यमरः । व्यजनमिति नित्यं न स्यात् । अनेन पक्षे वीभावात् । उच्यते । 'संज्ञाच्छन्दसोर्बहुलम्' इति वार्तिकं सामान्येन प्रकरणे कार्यव्यभिचारार्थमिति व्याख्यातम् । व्यवस्थितविभाषात्वाद्वा ॥

## तद्राजस्य बहुषु तेनैवास्त्रियाम् । ६२ ।

कथम्—

'चत्वारो वयमृत्विजः स भगवान् कर्मोपदेष्टा हरिः
संग्रामाध्वरदीक्षितो नरपतिः पत्नी गृहीतव्रता ।
कौरव्याः पशवः प्रियापरिभवक्लेशोपशान्तिः फलं
राजन्यौघनिमन्त्रणाय रसति स्फीतं यशोदुन्दुभिः' ॥

इति वेणी । यतः 'कुर्वादिभ्यो ण्यः' (४-१-१५१) इत्यक्षत्रियवृत्तिकुरुशब्दात् (सं ? सा)वकाश इति क्षत्रियवृत्तेः 'कुरुनादिभ्यो ण्यः' (४-१ १७२) इति भाष्यम् । तस्य च तद्राजत्वाल्लुक् । तथा च भारविः 'चिराय तस्मिन् कुरवश्चकासति' । उच्यते । 'कुर्वादिभ्यो ण्य' इत्यत्रापि क्षत्रियगोत्रग्रहणानुवृत्तेः सोऽपि क्षत्रियगोत्रवचनादेव । तस्मात्तद्राजत्वादलुगिति भागवृत्तिः । जयादित्यमते तु द्वयोरेकस्मिन् वा 'कुरुनादिभ्यो ण्य' इति कौरव्यशब्दमुत्पाद्य ततः 'तत्र साधुः' (४-४-९८) इति यत् । यकारलोपयलोपौ कृत्वा कौरव्यो दुर्योधनो द्रोणो दुःशासन इत्यादय उच्यन्त इति वाच्यम् । यथेदं 'परस्परं परिरेभिरे कुकुरकौरव-

१. 'इतानिरैः' इति स्यात्. २. 'दक्षिण' इति स्यात्.

स्त्रियः' इति माघः । तथा 'सोऽयं मद्भुजपञ्जरे निपतितः संरक्ष्यतां कौरवाः!' । कच्छादि (४-२-१३३) पाठाद् 'मनुष्यतत्स्थयोर्वुञ्' (४-२-१३४) इति वुञा भाव्यम् । उच्यते । शब्दव्युत्पत्तेर्विवक्षाधीनत्वात् । मनुष्याणां कुरुशब्देनाविवक्षितत्वान्न वुञ् । ततश्च तस्येदमर्थेऽण् । जनपदविवक्षायां वाञ् । 'विषयो देशे' (४-२-५२) इति अणि ता(त्पर्या)दिति भागवृत्तिः । कथं 'तस्यामेव रघोः पाण्ड्याः प्रतापं न विषेहिरे' इति रघुः, यतो 'वृद्धेत्कोसले' (४-१-१७१) त्यत्र जनपदशब्दात् 'पाण्डोर्ड्यण् वक्तव्य' इति ड्याणि तस्य तद्राजत्वाल्लुका भाव्यम् । उच्यते । पाण्डौ साधवः पाण्ड्याः । 'तत्र साधुरि' (४-४-९८) ति यत् ॥

## अदिप्रभृतिभ्यः शपः । ७२ ।

कथम् 'न विश्वसेत् पूर्वविरोधितस्य' इति पञ्चतन्त्रम् । 'आश्वसेयुर्निशाचराः' इति भट्टिः । पचाद्यजन्तादाचारे क्विपि लिङि रूपम् । 'गणकार्यमनित्यमि'ति जयमङ्गला । भूवादेराकृतिगणत्वात् तत्र द्रष्टव्य इति । वृत्करणं तु यजादिसमाप्त्यर्थम् । कथं 'वासुदेवं परित्यज्य योऽन्यं देवमुपासते' । 'अस गतिदीप्त्यादानयोरि'ति भौवादिकस्योभयपदिनः ॥

## गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु । ७७ ।

कथं 'मा भैः शशाङ्क! मम सा धुरि नास्ति राहुः' इति । सिचो भावान्मा भैषीरिति प्राप्नोति । तथा च भट्टिः—'मा स्म भैषीस्त्वयाचैव कृतार्थो द्रक्ष्यते पतिरि'ति । उच्यते । आगमशासनानित्यत्वाद् 'अस्तिसिचोऽपृक्ते' (७-३-९६) इति नेट् । ततो 'हल्ङ्याबि'ना (६-१-६८) सिलोपे सिचो विसर्जनीयः । अथवा निर्देशे केनचिदाचार्येण भीग्रहणमपि आहितम् । 'गातिस्थाघुपाभूभ्यः' (२-४-७७) इति पञ्चम्येकवचनम् । तत 'एरनेकाचः' (६-४-८२) इति यणादेशे भूभ्य इति निर्देशात् । एतन्मते सिचो लोपे रूपम् ॥

इति शरणदेवविरचितदुर्घटवृत्तौ
द्वितीयाध्याये चतुर्थः पादः ॥



## अथ तृतीयाध्याये प्रथमः पादः ।

### प्रत्ययः । १ ।

### धातोः कर्मणः समानकर्तृकादिच्छायां वा । ७ ।

कथं 'नदीकूलं पिपतिषतीति' । कूलस्याचेतनत्वादिच्छाया असम्भवात् । उच्यते । पदसंस्कारेण । कथं मुमूर्षति । मरणस्यानिच्छाविषत्वात् । उच्यते । अतिदुःखितस्य मरणमपीप्सितमिति । तद् दृश्यते—ईदृशं नाम तद्दुःखं येनेदं मरणं सुखमि'ति ॥

### कर्तुः क्यङ् सलोपश्च । ११ ।

कथं 'कस्त्वं भो निशि केशवः शिरसिजैः किं नाम गर्वायसे चक्री चन्द्रमुखीं प्रयच्छसि स मे कूर्पीं घटीं दोहिनीम्' । उपमानाद्यभावात् क्यङोऽभावात् । उच्यते । गर्वयोगाद्गर्वः अर्शआदित्वादाचि रूपम् । गर्वः पुरुषः । ततः अगर्वो गर्वो भवतीति भृशादित्वात् क्यङि गर्वायते ।

'अस्मिंश्चन्द्रमसि प्रसन्नमहासि व्याकोचकुन्दत्विषि
प्राचीनं खमुपेयुषि त्वयि गते दूरं निजप्रेयसि ।
श्वासः कैरवकोरकीयति मुखं तस्याः सरोजीयति
क्षीरोदीयति मन्मथो दृगपि च द्राक् चन्द्रकान्तीयति' ॥

कथं 'कैरवकोरकीयती'त्यादि । उपमानादाचार (३-१-१०) इति क्यच् विधीयते यथा पुत्रीयति च्छात्रमिति । न चात्र कैरवकोरकादिकमिव (श्वासाद)यः किञ्चिदाचरन्ति, किं तर्हि त एव कैरवकोरकादि यथात्मभावमाचरन्तीति । अतः 'कर्तुः क्यङ् सलोपश्चे' (३-१-११) ति क्यङ् युज्यते । उच्यते । आत्मानमित्युपमेयं द्रष्टव्यम् । तदयमर्थः—श्वासः कैरवकोरकमिवात्मानमाचरति । एवञ्च 'उपमानादाचारे' इत्येव क्यच् । कथं 'प्रायः पुण्यवता देशे शरदियं प्रावृषायते' क्यङ्, प्रावृष्यत इति हि स्यात् । उच्यते । प्रावृषेति तृतीयान्ते 'अयवयमये'ति अयतिधातोरयत इति । प्रावृषाशब्दोऽयं टाबन्तः । 'कालप्रभाता शरदा प्रावृषा तु जलार्णवा' इति कोशः । शरदि वर्षति वासव इति । केचित्तु (*चा?) क्षरं पठन्ति ॥

* 'प्याथरग्' इति स्यात्.

## बाष्पोष्मभ्यामुद्वमने। १६।

कथं 'धूमायन्त इवाश्लिष्टाः' इति। अनेन क्यङोऽभावात्। उच्यते। 'फेनाच्चेति वक्तव्यमि'ति केचित् 'फेनधूमाभ्यामि'ति पठन्ति। चकारानुवृत्तिसाध्यत्वादस्य। एवं चात्र 'लालायितः फणी'ति भाष्यकारप्रयोगः॥

## नित्यं कौटिल्ये गतौ। २३।

कथं 'यायावराः पुष्पफलेन चान्ये' इति भट्टिः। गत्यर्थादनेन नियमात् समभिव्याहारे यङोऽभावात्। उच्यते। 'सर्वे गत्यर्था ज्ञानार्था' इति ज्ञानार्थत्वात्॥

## लुपसदचरजपजभदहदशगृभ्यो भावगर्हायाम्। २४।

कथं 'चैराचरचञ्चुरे'ति भट्टिः। गत्यर्थत्वादनेन चरेर्भावगर्हायां यङो विधानात्। उच्यते। क्रियागर्हा तत्र विवक्षिता पदसिद्ध्यर्थम्॥

## सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्। २५।

कथं 'लिखापयति वर्णापयती'ति कायस्थप्रयोगः। उच्यते। अर्थवेदे'त्यादिना (!) आपुग् वक्तव्य इत्याकारे पुकि वा वक्तव्ये आपुको विधानमन्यत्र भावार्थम्। तेन लिखापयतीत्यादिरिति रक्षितः। आकारे कृते 'अर्त्तिह्री' (७-३-३६) इत्यादिना पुक्। कथं 'जुघुषुः पुष्पमालया' इति, नित्यण्यन्तत्वात्। उच्यते। 'घुषिरविशब्दने' (७-२-२३) इत्यस्माद् ज्ञापकाद् विशब्दने (वा) णिजिति वृत्तिः। अथवा भौवादिकपरस्मैपदी॥

## हेतुमति च। २६।

कथं 'रामो राज्यमकारयदि'ति रामायणम्। तथा—'सकलभुवनराज्यं कारयामास तेन' इति नन्दी। 'दृष्टे सूर्ये पुनरपि भवान् वाहयेदध्वशेषमि'ति मेघः। 'कोकिला विष्णुरूपेण राजकन्यामजीहरन्'। स्वार्थे णिजभावात्। उच्यते। विवक्षाधीनत्वाल्लक्षणस्य णिजुत्पत्त्यर्थो हेतुमद्भावो विवक्षणीयः व्युत्पत्त्युत्तरकालं स्वार्थे वर्तते स्वभावादिति 'आरोहयते हस्ती स्वयमेवे'त्यत्र रक्षितः। 'सकलभुवनराज्यं

१. 'अर्थवेदसत्यानाम्' इति स्यात्. २ 'कारयामास्मनेन' इति तु भट्टिः.

कारयामासे'त्यत्र तु पादुकायाः प्रयोज्यक(र्म ?)र्तृत्वेन हेतुहेतुमद्भाव इति जयमङ्गला। एवं 'कोकिला विष्णुरूपेणे'त्यत्र विष्णुरूपस्य प्रयोज्यत्वात् सिद्धिः॥

## गुपूधूपविच्छिपणिपनिभ्य आयः। २८।

कथं 'गुपितामि'ति। 'गुपू रक्षण' इत्यस्य 'आयादय आर्धधातुके वा' (३-१-३१) इति विकल्पात् गुप्तं गोपायितमिति स्यात्। उच्यते। 'गुप गोपनकुत्सनयोरि'त्यतः निन्दादिषु सनुत्पत्तेरन्यत्र गुपितामिति धातुप्रदीपटीका। चौरादिकस्य तु गोपितमिति। कथं 'पणायितम्'। पनिना साहचर्यात् स्तुत्यर्थ एवायप्रत्यय इष्यत इति वृत्तिकृदुक्तत्वात्। उच्यते। कैश्चित् साहचर्यं नाद्रियत इति रक्षितः। तथा च भट्टिः—'न चोपलेभे वणिजां पणायान्' इति। कथं 'गां विच्छतीति गोविड्' इति 'च्छ्वोः शूडनुनासिके च' (६-४-१९) इत्यत्र न्यासः। उच्यते। तुदादावस्य पाठसामर्थ्यादायप्रत्ययोऽत्र विकल्प्यत इति केचित्। अन्ये तु तुदादिपाठसामर्थ्यादायप्रत्ययान्तादेव शप्रत्ययः। तेन विच्छायन्ती विच्छायतीति नुमो विकल्पाद् भविष्यतीति रक्षितः॥

## कास्प्रत्ययादाममन्त्रे लिटि। ३५।

कथं ददरिद्रौ 'कास्यनेकाज्ग्रहणं चुलुम्पाद्यर्थमि'ति वचनादामा भाव्यम्। उच्यते। 'आत औ णलः' (७-१-३४) इत्यत्र ओकारे कर्तव्ये औकारकरणाद् 'दरिद्रातेरार्धधातुके लोपो वक्तव्यः' इति वचनाद्विषयभावेनाकारलोपे ददरिद्रौविति यथा स्यादित्येवमर्थम्। स च दरिद्रातेरामो दरिद्रत्वं ज्ञापयति। कथं 'कासाञ्चक्रे पुरी सौधैरि'ति भट्टिः। 'कासृ शब्दकुत्सायाम्' इत्यस्यात्र ग्रहणम्। न च 'काशृ दीप्तावि'त्यस्य ग्रहणम्। 'चकाशे तीर्णलौहित्य' इति प्रयोगात्। उच्यते। शब्दकुत्सार्थस्यैवानेकार्थत्वात् प्रकाशार्थत्वे रूपं युक्तम्॥

## इजादेश्च गुरुमतोऽनृच्छः। ३३।

कथं 'सर्माहे मर्तुमानर्चे' इति भट्टिः। उच्यते। 'इन्धिभवतिभ्यां च'(१-२-६) इति कित्त्वं ज्ञापयति इजादिनिमित्त आमनित्य इति न्यासः॥

## कृञ्चानुप्रयुज्यते लिटि। ४०।

कथं 'तं पातयां प्रथममास पपात पश्चाद्' इति रघुः । आम्प्रत्ययस्यैवेति न्यासेऽवधारणात् । उच्यते । पातशब्द उपपदे अतेर्विचि द्वितीयान्तं पातयां, पातं यान्तमित्यर्थः । आसेति अस गत्यादेः रूपम् । प्राप्तवानित्यर्थः । यद्वा आम्प्रत्ययान्तस्य क्रियासाधनप्रधानत्वात् तथाविधस्यैव व्यावृत्तिः । प्रथममिति तु क्रियाविशेषणं न साधनप्रधानम् । एव 'सम्भावयां राघवमास वृष्टेरि'त्यपि सिद्धम् ।

## सर्त्तिशास्त्यर्त्तिभ्यश्च । ५६ ।

कथं 'समारन्त ममाभीष्टा' इति भट्टिः । यतश्चकारेण परस्मैपदेष्वित्यनुवृत्तेः भाष्ये योगविभागो वैचित्र्यार्थ उक्तः । उच्यते । योगविभागात् परस्मैपदेष्विति केचिन्न सम्बध्नन्ति । केचिदुत्तरार्थं त्वनुवर्त्तत एवेत्याहुरिति रक्षितः ॥

## कृदतिङ् । ९३ ।

कथं 'ककार' इत्यादौ विभक्तिः कारप्रत्ययस्य 'धातोः' (३-१-९१) इत्यविधानात् कृत्त्वाभावात् । उच्यते । धात्वधिकारे विधानसामर्थ्याद् बहुलवचनाद्वा ॥

## वासरूपोऽस्त्रियाम् । ९४ ।

कथं 'नित्यं पचानी'ति । यतो वासरूपेण 'तस्थस्थमिपां तान्तन्तामः' (३-४-१०१) इत्यमा पक्षे भाव्यम् । उच्यते । 'लिटः कानज् वा' (३-२-१०६) इति वचनाल्लादेशेषु वासरूपविधिर्नास्तीति ज्ञाप्यते । कथं 'कण्डूतिर्वेदनादपेति शिरस' इति कण्ड्वादियगन्ताद् 'अ प्रत्ययाद्' (३-३-१०२) इत्यकारेण क्तिनो-बाधा स्याद्, अस्त्रियामिति वासरूपविधेर्निषेधात् । उच्यते । ('क्तिन्नाबादिभ्यः' इति वचनात्) । 'तदधीते तद्वेद' (४-२-५९) इति वचनाद् ज्ञापकाद् भावार्थक्तस्य 'क्तल्युडि'त्यत्र ग्रहणाद् वर्तमानार्थक्तेन वासरूपविधिना लडपि भवति । अपरं बहुत्वान्नोक्तम् ॥

## अचो यत् । ९७ ।

कथम् 'अनेन भाव्य संस्कृतम्' (?) । उच्यते । 'ओरावश्यके' (३-१-१२५) इति ण्यत् ॥

## पोरदुपधात् । ९८ ।

कथं त्रिकाण्डे 'जाप्या स्यादघमर्पण' इति । बाहुलकादिति पारायणम् ॥

## गदमदचरयमश्चानुपसर्गे । १०० ।

१. अस गत्यादेरित्यस्य 'अस गतिदीप्ती'त्यात्रानुपूर्वीबोधितस्य असधातोरित्यर्थः ।

कथं 'तेन न तत्र भवेद्विनियम्यामि'ति 'इनहना'दि (६-४-१२) सूत्रे वृत्तिः। केवलाद्यत् पश्चाद्विनिशब्देन समासः। उपसर्गप्रतिरूपको विनिशब्दः। विनियमे साधुर्विनियम्यः। 'तत्र साधुः' (४-४-९८) इति यत्प्रत्यय इत्यन्यः॥

## वदः सुपि क्यप् च। १०६।

चकारेण यदपि समुच्चीयते। कथं कर्तरि 'सत्यवद्यो रघूत्तम' इति भट्टिः। कृत्यत्वाद् भावे विधानात्। उच्यते। अर्शआदित्वादच्। अथवा बाहुलकात् कर्तरि यदिति। कथमनूद्यम्। उपसर्गप्रतिरूपकत्वादनोः॥

## एतिस्तुशास्वृदृजुषः क्यप्। १०९।

कथं 'का ते स्तुतिः स्तव्यपरावरोक्तिः' इति चण्डी, अनेन क्यपो भावात्। उच्यते। स्तवमर्हतीत्यस्मिन्नर्थे 'दण्डादिभ्यो [यत्' (५-१-६६) इति यद्] वक्तव्यः॥

## ऋहलोर्ण्यत्। १२४।

कथं—

'किं किं मां समुपेत्य चुम्बसि बलान्निर्लज्ज! लज्जा कुतो
वस्त्रान्तं शठ! मुञ्च मुञ्च शपथैः किं धूर्त! निर्बन्धसे।
खिन्नाहं तव रात्रिजागरतया तामेव याच प्रियां
निर्माल्ये सति पुष्पदामनिकरे का षट्पदानां रतिः' ॥

जागरतयेत्ययुक्तम्। 'जाग्रर्तेरकारो वा' इत्यकारे ण्यति च जागरा जागर्येति स्यात्। उच्यते। पचाद्यचि भविष्यति। निर्बन्धस इत्यपशब्द एव, निर्बध्नासीति हि स्यात्। अथवा निर्बध्यत इति यका प्रथमपुरुषेण वा पाठः कर्तव्यः॥

## ण्वुल्तृचौ। १३३।

कथम् 'अधिष्ठक' इति कायस्थोक्तिः ण्वुला अधिष्ठायक इति हि स्यात्। उच्यते। 'आतश्चोपसर्गे' (३-१-१३६) इति कः। ततः स्वार्थे कः॥

## टुन्योरनुपसर्गे। १४२।

'क्षपितचमरीबालभारो दवाग्निरि'ति मेघः। 'दवो दावो वनानल' इत्यमरः। णप्रत्यये दाव इति स्यात्। उच्यते। 'विभाषा ग्रह' (३-१-१४३) इति विभाषापि सम्बध्यते॥

इति शरणदेवविरचितदुर्घटवृत्तौ
तृतीयाध्याये प्रथमः पादः।

## अथ द्वितीयः पादः ।

### कर्मण्यण् । १ ।

कथं 'जातिस्मरौ नूनमिमावमूतामि'ति रघुः । उच्यते । पचाद्यच् । कथं[1] 'कलहंसराममहितः कृतवानि'ति भट्टिः । उच्यते । अन्तर्भावितण्यर्थत्वात् सकर्मकत्वम् । घञन्तेन वा वैयधिकरण्ये बहुव्रीहिः ॥

### आतोऽनुपसर्गे कः । ३ ।

कथं 'कर्षन्(?)स शैवाललता नदीष्ण' इति रघुः[2] । नद्यां स्नातो नदीष्ण इत्यधिकरणे उपपदे कः, कर्मणीत्यनुवृत्तेः । उच्यते । मूलविभुजादित्वात् । 'निनदीभ्यां स्नातेः कौशले' (८-३-८९) इति षत्वविधौ वृत्तिकृता 'सुपि स्थ' (३-२-४) इत्यत्र योगविभागात् प्रत्यय इत्युक्तम् ॥

### हरतेरनुद्यमनेऽच् । ९ ।

कथं तमो(?)ज्योत्स्नाहरः । उच्यते । हरतेरिति योगविभागे उद्यमनेऽवृत्तिः ॥

### अधिकरणे शेतेः । १५ ।

'गिरौ डश्छन्दसि' इति वक्तव्यम् । 'गिरिशमुपचचार प्रत्यहं सा सुकेशी' इति 'गिरीशो गिरिशो मृड' इति च । उच्यते । गिरिरस्याश्रयत्वेनास्तीति लोमादित्वाच्छः । अथवा यजुःक्रतुरिति कर्तव्ये 'अध्वर्युक्रतु' (२-४-४) इति ज्ञापकात् छान्दसा अपि कचिद्भाषायां प्रयुज्यन्त इति रक्षितः ॥

### चरेष्टः । १६ ।

कथं 'प्रेक्ष्य स्थितां सहचरीमि'ति रघुः । अधिकरणे इत्यनुवृत्तेः । उच्यते । चिन्त्यतामिति भागवृत्तिः । 'ट' इति योगविभागो वा (क?त)दा कर्तव्यः । भिक्षासेनासहचराद्वा[3] ॥

---

१. कथमिति । कलहंसराममिति रावणगृहविशेषण कर्मण्यणन्त मन्यते. २. रघौ नेयमानुपूर्वी दृश्यते । किन्तु पञ्चमसर्गे 'शैलोपम शैवलमञ्जरीणां जालानि कर्षन्नुरसा स पश्चात्' इत्यस्यार्थस्य कश्चित् पाद एव 'कर्षन् स शैवाललता नदीष्ण' इत्येवंरूपतया पठ्यमान उपलब्धः स्याच्छरणदेवेन । 'आनाय्यिनस्तद्विजये नदीष्णान्' इति षोडशे सर्गे प्रयोगोऽस्ति. ३. 'सह-पाठाद्वा' इति स्यात्.

## पुरोऽग्रतोऽग्रेषु सर्तेः । १८ ।

कथं 'पुरस्सरा वामि'ति भाषावृत्ति । उच्यते । पचादिपाठात् सिद्धिरिति केचित् ॥

## फलेग्रहिरात्मम्भरिश्च । २६ ।

कथम् 'उदरम्भरयश्चकोरा' इति मुरारि· । उच्यते । चकारात् । कुक्षिंभरिरित्युपलक्षणम् । तथा च चान्द्र सूत्रम् 'आत्मोदरकुक्षिभ्य' इति ॥

## अपे क्लेशतमसोः । ५० ।

कथं 'भयापहा.' तथा 'पटोलपत्र पित्तस्य नसितस्य कफापहा' । 'अन्येष्वपि दृश्यते' (३-२-१०१) इति डः ॥

## अमनुष्यकर्तृके च । ५३ ।

कथं 'कृतघ्ने नास्ति निष्कृति' । तथा 'ब्रह्मघ्नमपि चण्डालम्' । तथा 'बलभद्र प्रलम्बघ्न.' । तथा 'शत्रुघ्नो राजा' । उच्यते । मूलविभुजादित्वात् कप्रत्यय इति भाषावृत्ति । पदसंस्काराद्वा । पदान्तरसन्निधाने हि मनुष्यकर्तृकता । बाहुलकाद्वा टक् ॥

## स्पृशोऽनुदके क्विन् । ५८ ।

कथम् 'उत्तार्य ते जलान्यष्टौ लङ्काया उदकस्पृशः' उच्यते । औणादिकोऽत्र क्विप्रत्यय ॥

## ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च । ५९ ।

कथं 'नीचो वदति न कुरुते' । न्यङ्ङिति स्यात् । उच्यते । क्विन्प्रत्यये सति 'अनिदिता हल' (६-४-२४) इत्यनुनासिकलोपे 'अच् प्रत्यन्ववपूर्वाद्' (५-४-७५) इत्यत्र 'अजि'ति योगविभागादच् । 'अच' (६-४-१३८) इत्यकारलोपः । 'चौ' (६-३-१३८) इति दीर्घत्वे नीच इति स्यात् ॥

## सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप् । ६१ ।

कथ'मनुष्यमि'ति । 'वदः सुपि क्यप् च' (३-१-१०६) इति क्यबुपसर्गे न स्यात् । इह सुपीत्यनुवृत्तावुपसर्गग्रहणमन्यत्र सुब्ग्रहणे नोपसर्गग्रहणमिति ज्ञापनार्थमिति वृत्ति· । उच्यते । उपसर्गप्रतिरूपकोऽनु· ॥

## क्रव्ये च । ६९ ।

कथं 'क्रव्याद' 'अदोऽनन्ने' (३ २-६८) इति सिद्धे क्रव्यग्रहण वास विधाननिवृत्त्यर्थमिति भाष्यम् । उच्यते । कृत्तविकृत्तशब्द उपपदे 'कर्मण (३-२-१) पृषोदरादित्वात् कृत्तविकृत्तशब्दस्य क्रव्यादेश इति काश्चित् ॥

## सुप्यजातौ णिनिस्ताच्छील्ये । ७८ ।

कथ 'स्वैरिणी' वृद्ध्यभावादिति । स्वेन ईरितु शीलमस्या । णिनि । च्यते । 'स्वादीरेरिणोर्वृद्धिर्वक्तव्या' ॥

## ब्रह्मभ्रूणवृत्रेषु क्विप् । ८७ ।

'न हिमहा हिमहानिकरोऽभवदि'ति माघ । तथा 'कामहा स महेश्व तथा 'मधुहे'त्यादि । ब्रह्मादिषु हन्तेरेवेति नियमात् । उच्यते । 'बहुल छन्द (३-२-८८) इत्यतो बहुलग्रहणानुवृत्तेर्नियमव्यभिचारादिति रक्षित । 'नहिम त्यादौ नहिशब्दोऽव्ययम् । अभीक्ष्ण न सूर्यो महाहिमहानिकरोऽभवदित्यर्थ अन्ये त्वाहु — कथं 'वृत्रस्य हन्तु कुलिशमि'ति, अनेन क्विप प्रसङ्गात् । च्यते । कालसामान्यविवक्षाया तृच् भविष्यति । एव 'हिमहे'त्यादौ च 'अ भ्योऽपि दृश्यते' (३-२-१७८) इति क्विप् ॥

## परोक्षे लिट् । ११५ ।

कथम् 'अभून्नृपो विबुधसख परन्तप' इति भट्टि । 'अभूदभू प्रतिपक्षजन्मनामि'ति माघ । उच्यते । पदसस्कारे भूतसामान्यविवक्षाया लुङ् एव च 'कौसल्ययासावि सुखेन राम प्राक् केकयीतो भरतस्ततोऽभूदि'त्यपि केकयशब्दादुपचारेण दुहितृवृत्तेर्ङीपि केकयीति । कथं 'यावद् गिर खे मरु चरन्ती'ति कुमार । परोक्षे लिट् । भस्मावशेषकरणापेक्षया यद्वर्तमानत्व तद ध्यारोप्य लट् ॥

## वर्त्तमाने लट् । १२३ ।

'येधाह धान्या प्रथमोदित वच' इति रघु । आहेति वर्तमाने । उच्यते तिङन्तप्रतिरूपकोऽयमाहेति शब्द कालसामान्यवचन । एव च 'स गुरुवर्ति

१ 'कृत्तविकृत्तपक्वमासशब्द उपपदेऽण्' इति शब्दकौस्तुभ २ 'उवाच धान्या' इति साम्प्रतिका पाठा.

पौलस्त्ये भूयोऽप्याह महेश्वरः' इति कैलासोद्धरणम् । 'परिघोरुभुजानाह हसन्ती स्वागतं कपीन्' इति भट्टिः । कथाभिसन्धानेन वर्तमानविवक्षा यथा 'अद्य कंसो निहन्यत' इति । 'लेखके नास्ति दोष' इत्यत्र नास्तिशब्दोऽयं विभक्तिप्रतिरूपकः कालसामान्यवाची । 'कथं न ज्ञास्यति प्रभुरि'ति कुमारः । वर्तमाने लृट् । उच्यते । 'प्रत्येकं विनियुक्तात्मे'ति प्रत्येकमात्मविनियोगात् तदनन्तरं ज्ञानस्य भाव्यमानत्वाल्लृड् विवक्षावशात् ॥

## लटः शतृशानचावप्रथमासमानाधिकरणे । १२४ ।

कथम् 'अपि शाकं पचानस्य' । मुका भाव्यम् । उच्यते । आगमशास्त्रस्यानित्यत्वान्न मुक् । 'आतो ङित' (७-२-८१) इति आदेशोऽपि नास्ति, गणकार्यानित्यत्वाच्छपोऽभावात् ॥

## स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच् । १५८ ।

कथम् 'ईर्ष्यालुः', +'बुभुक्षालुः', 'लज्जालु'प्रभृतयः । उच्यते । ईर्ष्यामालातीति 'मृगय्वादि'त्वात् *कुप्रत्ययः । 'शीतालुरि'ति शीतं न सहत इति तद्धितः ॥

## विदिभिदिच्छिदेः कुरच् । १६२ ।

कथं 'कुलिशं भिदुरं पविरि'त्यमरः । तथा 'संसारबन्धच्छिदुरान् द्विजातीनि'ति घोषः । 'करीन्द्रबन्धाच्छिदुरं मृगेन्द्रमि'ति विजयः । 'छिदुरयादुरयाचितमङ्गना' इति माघः । 'भिदेः छिदेः कर्मकर्त्तरि चायमिष्यते' इति वृत्तावुक्तत्वात् केवले न स्यात् । उच्यते । छिदिभिदेः 'कर्तरि चे'ति वामनोक्तत्वात् । अत्र 'कर्मकर्तरि चे'ति चकारोऽपि केवलेऽपीति लिङ्गम् ॥

## सनाशंसभिक्ष उः । १६८ ।

कथं 'सन्तः प्रणयिवाक्यानि गृह्णन्त्यनसूयव' इति मीमांसावार्तिकम् । अनुसूयशब्दः कण्ड्वादियगन्तः । नञस्यात्रानुस्मरणम् । उच्यते । 'डुमकरणे मितद्र्वादिभ्य उपसङ्ख्यानमि'ति डुः ॥

---

१. वामनेति । तदीये हि काव्यालङ्कारे 'भिदुरादयः कर्मकर्तरि कर्तरि च' (५-२-३८) इत्यभिधानाद् इत्यर्थः । वृत्तिवाक्यगतचकारोऽप्येतमभिप्रायक इत्याह—अत्रेत्यादि.

---

+ बुभुक्षालुरिति खपुस्तके न पठ्यते.

* 'कुः ङी' इति ख.पाठः.

## विन्दुरिच्छुः ॥ १६९ ॥

कथं तैलबिन्दवः । उच्यते । †'शृस्वृस्निहित्रप्यासिवसिहनिक्लिदिबन्धिमनि-भ्यश्च' (उ. सू) इति चकाराद् बिधेवयवेजोऽप्युप्रत्ययः ॥

## मतिबुद्धिपूजार्थेभ्यश्च । १८८ ।

कथं 'त्वया ज्ञातो वधाद् भीत' इत्यादि । 'सत्यपि सम्भवे बाधनं भवती'ति वर्तमानात् क्तेन भूते क्तस्याभावात् वर्तमानात् क्ते च 'क्तस्य च वर्तमाने' (२-३-६७) इति षष्ठी स्यात् । उच्यते । अपशब्द इति पदे भागवृत्तिः । 'अस्ति च सम्भवो यदुभयं स्यादि'ति भूत+क्तेनापि भाव्यमित्यन्यः । 'मतिबुद्धिपूजार्थेभ्यश्च' इत्यनुक्तसमुच्चयार्थश्चकारः ॥

'शीलितो रक्षितः क्षान्त आक्रुष्टो जुष्ट इत्यपि ।
रुष्टश्च रुषितश्चोभावभिव्याहृत इत्यपि ॥
हृष्टतुष्टौ तथाक्रान्तस्तथोभौ संयतोद्यतौ ।
कष्टं भविष्यतीत्याहुरमृतः पूर्ववत् स्मृतः ॥'

तथा सुप्तः शयित आशितो लुप्त इत्येवमादीनां वर्तमाने वृत्तिः । वर्तमानभूतात् *क्तस्य बाधनमिष्यते । तेन त्वया ज्ञातो मया ज्ञात इत्याद्यचिकित्स्यमिति भागवृत्तिरिति भाषावृत्तिः । कथं भूते क्ते सति 'त्वया शीलितो मया ज्ञात' इति, बुध्यर्थत्वाद् वर्तमानक्तेन भूतक्तस्य बाधनात् । अत एव 'क्तस्य च वर्तमाने' (२-३-६७) इति षष्ठी न भवति । यदि वर्तमानक्तस्य ग्रहणं स्यात् तर्हि 'क्तस्य च वर्तमान' इति षष्ठी स्यात् । कालदुष्टा एवापशब्दा (इति) भागवृत्तिः । कथं 'कलहंसरामभहितः कृतवानि'ति यमक महित इति, अनेन भूतक्तस्य बाधनात् । चिन्त्यम् । चिन्ता चात्र 'मतिबुद्धि' इत्यादिना वर्तमानकाले समासः क्तो विधीयते । यस्तु भूतविहितः स मत्यादिभ्यो भवत्येव । भूतक्तस्तु (न) बाध्यते मत्या-

१ विदीत्यादि । 'विदि अवयव' इत्यानुपूर्वीबोधितादपि धातोरुप्रत्ययो जायत इति तात्पर्यम्.

† 'महस्निहत्रजत्रसिवारीहनिष्ठायिवयितनिभ्यश्च' इति क. पाठ:.

\+ 'तत्कान्तेना' ख. पाठः.

* 'कान्तस्य' ख. पाठ:.

दिक्तेन । (तेन) वर्तमानकाले भूतेऽपि । ए(ततु?केतु)तक्रकौण्डिन्यन्यायेन मत्यार्थेभ्यो भूते यः क्तः प्राप्तः, स वर्तमानक्तेन बाधितव्यः । तेन (वर्तमाने ?) मत्यादिभ्यो भूतक्तो नास्ति । एतच्च 'क्तेन च पूजायाम्' (२-२-१२) इत्यत्रानुन्यासकृतोक्तं विस्तरेण । अत एवाह — 'उपज्ञाते' (४-३-११५) इति तृतीयासमर्थात् 'तेन प्रोक्तम्' (४-३-१०१) इत्यादिकारकात् प्रत्ययं कुर्वताचार्येणैव ज्ञापितं मत्यादिभ्यो विहितस्य क्तस्य योगे तृतीयासमासो भवत्येवेति तेनेश्वरज्ञापितमिति निर्देशादेवास्ति मत्यादिभ्यो भूतेऽपि क्त इति । अत्र प्रकरणे तक्रकौण्डिन्यन्यायेन यदुक्तं तदनुन्यासकारेण दूषितमिति । कथम् 'इष्यते ज्ञायते' इषिप्रभृतिभ्योऽनेन वर्तमानक्तेन लड्बाधकेन भवितव्यम् । नचात्र वासरूपविधिः । 'क्तल्युट्तुमुन्खलर्थेषु वासरूपविधिर्नास्ती'ति । उच्यते । 'ल्युट्तुमुनि'त्यत्र *ल्युटा साहचर्याद् भावे (क्तस्य ग्रहणं) न वर्तमानक्तस्य । ततश्चात्र वासरूपविधेरप्रतिषेधादिषिप्रभृतिभ्यो युक्त एव पक्षे वर्तमाने लट् । एवं क्तल्युटो (त्र इपो! स्तूपादा)नं चिन्त्यम् । तथा हि नपुंसके घञि हासमिति मा भूत् । तन्निवृत्तिः पुनरेकेनैव क्तेन ल्युटा वा शक्यत इति । किराते 'श्रियः कुरूणामि'त्यत्र विदित्वा (ज्ञाते ज्ञानस्य वेशो नास्तीति नीते ?) एतत् कथं या§वता क्तेन न भाव्यम् । सम्ब‡न्धनं घटते । अत्र 'धातुसम्बन्धे प्रत्ययाः' (३-४-१) इति विद्यते, यथाग्निष्टोमयाज्यस्य पुत्रो जनिता । अयथाकालोक्ताः प्रत्ययाः साधवो भवन्ति । न्यग्भूतवर्तमानकालशक्ति(रिति?विदि) क्रियासमभि§व्याहारवानिति भूतवृत्तिक्रियाया योगात् क्तोऽपि भूतकालवृत्तिर्भवति ॥

इति शरणदेवविरचितदुर्घटवृत्तौ

तृतीयाध्याये द्वितीय. पादः ।

---

* 'ल्युट्सा' ग. पाठः.

§ 'यता न क्तेन भा' ख. पाठः.

‡ 'न्धातु ध' ग. पाठः.'

§ 'भिव्याव्यया' क. पाठः.

दिक्तेन । (तेन) वर्तमानकाले भूतेऽपि । ए(ततु?केतु)तक्रकौण्डिन्यन्यायेन मत्यादर्थेभ्यो भूते यः क्तः प्राप्तः, स वर्तमानक्तेन बाधितव्यः । तेन (वर्तमाने ?) मत्यादिभ्यो भूतक्तो नास्ति । एतच्च 'क्तेन च पूजायाम्' (२-२-१२) इत्यत्रानुन्यासकृतोक्तं विस्तरेण । अत एवाह— 'उपज्ञाते' (४-३-११५) इति तृतीयासमर्थात् 'तेन प्रोक्तम्' (४-३-१०१) इत्यादिकारकात् प्रत्ययं कुर्वताचार्येणैव ज्ञापितं मत्यादिभ्यो विहितस्य क्तस्य योगे तृतीयासमासो भवत्येवेति तेनेश्वरज्ञापितमिति निर्देशादेवास्ति मत्यादिभ्यो भूतेऽपि क्त इति । अत्र प्रकरणे तक्रकौण्डिन्यन्यायेन यदुक्तं तदनुन्यासकारेण दूषितमिति । कथम् 'इष्यते ज्ञायते' इषिप्रभृतिभ्योऽनेन वर्तमानक्तेन लड्बाधकेन भवितव्यम् । नचात्र वासरूपाविधिः । 'क्तल्युट्तुमुन्खलर्थेषु वासरूपविधिर्नास्ती'ति । उच्यते । 'ल्युट्तुमुन्नि'त्यत्र *ल्युटा साहचर्याद् भावे (क्तस्य ग्रहणं) न वर्तमानक्तस्य । ततश्चात्र वासरूपविधेरमतिपेधादिषिप्रभृतिभ्यो युक्त एव पक्षे वर्तमाने लट् । एवं क्तल्युटो (त्र इयो? स्तूपादा)नं चिन्त्यम् । तथा हि नपुंसके घञि हासमिति मा भूत् । तन्निवृत्तिः पुनरेकेनैव क्तेन ल्युटा वा शक्यत इति । किराते 'श्रियः कुरूणामि'त्यत्र विविदिन्नो (ज्ञाने ज्ञानस्य वेशो नास्तीति नीते ?) एतत् कथं या§वता क्तेन न भाव्यम् । सम्ब‡न्धनं घटते । अत्र 'धातुसम्बन्धे प्रत्ययाः' (३-४-१) इति विद्यते, यथाग्निष्टोमयाज्यस्य पुत्रो जनिता । अयथाकालोक्ताः प्रत्ययाः साधवो भवन्ति । न्यग्भूतवर्तमानकालशक्ति(रिति ?विदि) क्रियासमभि§व्याहारयानिति भूतवृत्तिक्रियाया योगात् क्तोऽपि भूतकालवृत्तिर्भवति ॥

इति शरणदेवविरचितदुर्घटवृत्तौ

तृतीयाध्याये द्वितीय पादः ।

---

* 'ल्युट्सा' ख. पाठः.

§ 'वना न क्तेन मा' ख. पाठः.

‡ 'न्धातु प' ख. पाठः.'

§ 'भिवाच्यया' क. पाठः.

## अथ तृतीयः पादः ।

### उणादयो बहुलम् । १ ।

### भावे । १८ ।

कथं 'मन्दाकिन्या पयश्शेषमि'ति कुमार । तथा 'शेषाण्यहौषीदि'ति भट्टि । हन्ति(१) 'शेषेति शीर्तिते ति श्रा चत । 'शेष समानमि'ति । 'घञज-बन्ता' पुंसी'ति भाष्याद्, घञपो (१नि१ 'पुमानि')त्याधिकारिकसूत्राच्च । उच्यते । प्रायिकमेतदिति 'ग्रहवृद' (३ ३ ५८) इत्यादौ न्यास । नानेषु घञ मति पुंस्त्व-मुक्त, करणादिषु तन्तस्य नानालिङ्गतेति वल्लभ । यत्तु 'नट' शेषगो' (६ ३-४४) त्यत्र रक्षितेनोक्त शेषशब्दस्यावशिष्टलिङ्गत्वा देति, तत् परिशिष्टार्थे छिलि-ङ्गाव्यभिचाराद् इहालोपितात् वथ भागमिति सिध्यतीति (१) । कथं 'सर्वे पदा हस्तिपदे पनिष्ठिता' इति, क्लीबत्वात् पद(शब्दस्य) । उच्यते –

"तले च तैले++प प्रविष्ट घृते च नामे च व ऽ प्रविष्टम् ।

· भक्षाणु नीचाणु गति प्रविष्टा सर्व प्द हस्तिपदे प्रविष्टानि",ते पाठः कर्तव्य ॥

### परिमाणाख्यायां सर्वेभ्यः । २० ।

कथं 'कुन्डणादि (४ २ ८०)सूत्रे मत्वर्थ प्रत्यया' नि वृत्तिः । तथा 'तिङोऽप्राप्त प्रत्यया' इति । उच्यते । प्रसङ्गा ॥

### उपसर्गे रुवः । २२ ।

कथं 'भीपजारावगढ़दमि ति । उच्यते । भार्गे वाद् 'धृ । धृ गु भापार्थाँ' इति चुरादिपाठाण्णिचि 'एरच्' (३ ३-५६) ॥

### श्रिणीभुवोऽनुपसर्गे । २४ ।

कथं 'प्रादुर्भाव' इति । प्र अ द्, दुरित्युपसर्गसमुदायस्याप्युपसर्गत्वादनेन घञा न भाव्यम् । उच्यते । 'उपसर्गप्रादुर्भ्यामस्तिर्य परः' (८ ३ ८७) इत्यत्रोप-सर्गग्रहण कृत्वा यत् प्रादुर्ग्रहण करोति तद् ज्ञापयति नास्योपसर्गकार्यमिति । कथं

(१) कृतु इति कथं पुनः स्वार्थे व्युत्पत्त तथु स्वातुर्गत पाय इत्यभिप्राय

'प्रभाव.' । प्रकृष्टो भाव. प्रभाव इति वृत्तिः । कथं 'जयो नीतः' । उच्यते । संज्ञापूर्वकस्य विधेरनित्यत्वाद् वृद्ध्यभावात् ॥

## उदि श्रयतियौतिपूद्रुवः । ४९ ।

कथं 'पतनान्ताः समुच्छ्र्या' इति । उच्यते । 'विभाषाऽऽङि रुप्लुवोः' (३-३-५०) इत्यतो विभाषाग्रहणानुवृत्तेः ॥

## एरच् । ५६ ।

कथं 'परिमलं कस्तूरिकार्द्रं धनुरि'ति । एरजन्तो ह्ययं क्रियावचनो गौणवचनो वा । तत्र द्रव्यसामानाधिकरण्यमयुक्तम् । उच्यते । असाधुरेवायं 'परिमयः कस्तूरिकार्द्रं धनुरि'ति पाठः । अर्द्धआयाचि स्रात्वं स्यात् । कथं 'भयनं भीरि'ति 'भीत्रार्थानाम्' (१-४-२५) इत्यत्र न्यासः । कथं 'भीत शिशुना, वर्षणं वृष्टमि'ति । 'अज्विधौ भयादिग्रहणं नपुंसकक्तादिनिवृत्त्यर्थमि'ति वचनात् । उच्यते । क्तादिनिवृत्त्यर्थमिति प्राप्तिमात्रोद्भावनम् । तेन वासरूपविधिना ल्युडपि भवति । न च 'क्तल्युट्तुमुन्खलर्थेषु वासरूपविधिर्नास्ती'ति वाच्यं, क्तादिना घञाविति(?) एतस्य व्यापाराभावादिति 'भीत्रार्थानाम्' (१-४-२५) इत्यत्र रक्षितः । एवं च व्यवस्थितविभाषासाध्यत्वादस्य वाक्यस्य । ज्ञापकं चात्र 'भयभीतभीतिभीभिरिति वक्तव्यमि'ति । तथा 'वृषभो वर्षणादि'ति भाष्यम् ॥

## ऋदोरप् । ५७ ।

कथम् 'अतिशयो भर' इत्यमरः, भृञोऽदीर्घान्तत्वात् । उच्यते । ('भृ भरण' इति श्र्यादेर्दीर्घान्तत्वात्) । कथं 'रूपावतारप्रक्रिया' । उच्यते । करणाधिकरणयोः 'अवे तॄस्त्रोर्घञ्' (३-३-१२०) इति । कथम् 'अवतारो नद्याः' । उच्यते । बाहुलकाद् घञिति वृत्तिकारः । कथं 'रुद्धोरुदन्तमुसलप्रसर निपेते' इति माघः, सर्तेरदीर्घान्तत्वात् । उच्यते । बहुलवचनाद् घञि संज्ञापूर्वकत्वाद् वृद्ध्यभावे गुण इत्यन्यः ॥

## ग्रहवृदृनिश्चिगमश्च । ५८ ।

कथं 'ग्रहे स्वयंग्रहनेपथ्यचातुरि'ति कुमारः । 'ग्राहं गताग्तत्र कथञ्चिदापे' इति । उच्यते । बाहुलकाद् घञ् । यद्वा ग्रह एव ग्राहः प्रज्ञादित्वादण् । कथं 'अविग्रहशर्वरीन' इति, सामान्यग्रहणात् । उच्यते । परिवारयति परिवारः ।

कथं तर्हि 'परीवारो पर्यभूता तथापि मामि'ति भट्टि । घञि सति 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' (६ ३-१२२) इति दीर्घत्वात् । उच्यते । बाहुलकाद् भावे घञि वृद्धि, दीर्घ । कथं 'व्रियते सारसग्रह' 'हलश्च' (३ ३-१२१) इति करणाधिकरणयोर्घञापो बाधनात् । उच्यते । 'करणाधिकरणयोश्च' (३ ३-११७) इति ल्युटा घञ् बाधित, सोपि 'हलश्च' इति घञा, ततश्च वासरूपविधिना यथा ल्युट्, तथा तद्विषये वासरूपविधिना अपीति । भवति 'क्तल्युट्तुमुन्खलर्थेषु वासरूपविधिर्ना'स्ती'ति । तत्र भावल्युटो ग्रहणमिति 'प्रत्यय'सूत्रे 'एरच्' (३ ३ ५६) इत्यत् प्रवर्तत इति इन्दुनोक्तम् । रक्षितेन तु सामान्येन ल्युट् गृहीत । तन्मते बाहुलकादच् । कथं 'याच्ञा मोघा वरमधिगुणे नाधमे लब्धकामा' इति मेघ । 'घञजपा पुसी'ति पुस्त्वात् । उच्यते । प्रायिकत्वमस्योक्तमेव । कर्मणि वा अप् । अव्यय वा । तदुक्त—'देवाद्वीप्सितजामातोर्वर श्रेष्ठे पुनस्त्रिषु । मनागिष्टे भवेत् क्लीबमन्ये त्वाहुस्तदव्ययमि'ति ॥

## व्यधजपोरनुपसर्गे । ६१ ।

कथं 'कर्णजाप' 'शूद्रस्य मन्त्रजाप प्रत्यनधिकारादि'ति न्यास । भाषार्थत्वाद् 'वृतुवृधुजप भाषार्था' इति चुरादिपाठाण्णिजन्तत्वाद् घञपोरन्यतर ॥

## मदोऽनुपसर्गे । ६७ ।

कथं 'मादो मद' इत्यमर । उच्यते । 'सध मादस्थयोश्छन्दसि' (६-३ ९६) इति निर्देशात् । 'स्वनहसोर्वा' (३ ३ ६२) इति वाग्रहणानुवृत्त्या व्यवस्थितविभाषाविज्ञानादिति 'सध मादस्थयोरि'त्यनान्य । 'भावे' 'अकर्तरि च कारके' (३-३-१९) इत्यनुवृत्ते कर्त्रर्थसम्भवात् न च (१) कर्तरीत्यन्य ॥

## सङ्घोद्घौ गणप्रशंसयोः । ८६ ।

कथं 'दमित्वाप्यरिसङ्घातानि'ति भट्टि । उच्यते । 'पूर्वं धातु साधनेन युज्यते' इति । (घात)यतेर्वा ॥

## उपसर्गे घोः किः । ९२ ।

कथं 'निधिस्तृड्विधिरि'त्यमर । 'भावे अकर्तरि च कारके' इत्यनुवृत्त कर्त्रर्थसम्भवात् । न च कर्तु करणत्वविवक्षाया भविष्यति, ल्युटा बाधितत्वात् । न च

१ 'देवान्वित' इति बालम० पाठ म चाशुद्ध । २ 'मानानिष्ट' इति कोशम पाठ स चाशुद्ध । ३ 'न च' इत्यस्य स्थाने 'नहुलवचनात्' इति पाठ भात.

वासरूपविधि । 'कल्युट्तुमुन्खलर्थेषु वासरूपविधिनास्ती'ति 'समर्थ' (२-१-१) सूत्रे रक्षित । उच्यते । बहुलवचनात् कर्तरि क्ति ॥

[1]स्त्रियां क्तिन् । ९४ ।

'ग्लाज्याहाभ्यो नि' कथ 'ग्लानि' । बाहुलकात् । पुरुषोत्तमदेवस्तु 'ग्लाज्याहाभ्य' इत्यत्र ग्लेधातुमपि पठति ॥

ऊतियूतिजूतिसातिहेतिकीर्त्तयश्च । ९७ ।

कथं 'कीर्तना' । उच्यते । बाहुलकाद्युच् ॥

व्रजयजोर्भावे क्यप् । ९८ ।

कथं 'यष्टि' । उच्यते । बाहुलकाद्वासरूपविधिना । अस्त्रियामित्यल्पार्थे नञ् ॥

संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः । ९९ ।

कथं 'भार्या' । उच्यते । चमावाद्भावे क्यप् । तेन 'भृञोऽसंज्ञायाम्' (३-१ ११२) इति कर्मणि क्यपि भृत्यः । संज्ञाया तु ण्यति भार्येति वृत्ति । कथं 'भृतिर्वेतनम्' । उच्यते । 'कर्मणि भृतौ' (३-२ २२) इति निर्देशात् । कथं 'सभासमितिससद' । उच्यते । बाहुलकादिना क्तिन् । 'इट किट कटी गतानि'त्यत्र इ गतावित्यतो वा । कथं 'गति' । कथ'मानुति' । उच्यते । 'मतिबुद्धी'ति, (३-२-१८८) 'रज कृष्यासुति' (१ २ ११२) इति निर्देशात् ॥

अ प्रत्ययात् । १०२ ।

कथं 'कण्डूतिर्वदनादपति शिरस' इत्युदात्त । कण्ड्वादियगन्तादनेनाकारप्रत्ययात् । उच्यते । द्विविधा कण्ड्वादयो धातव प्रातिपदिकानि च । तत्र प्रातिपदिकस्योतिशब्देन प्रदेशो दाधो वृद्धो वा वृत्तेन कण्डू ऊतिरिति षष्ठीसमासेन साधु । यद्येवं कथ 'न पदान्त' (१ १ ५८) इत्यत्र क्तिन्प्रत्यये वलिलोपस्योदाहरणम् । उच्यते । न्यासकृता 'स्त्रिया क्तिनि'ति यदुक्त, तत् 'कृत्यल्युटो बहुलम्' (३-३-११३) इति व्याख्येय । तथा चापशब्द एवाय । बहुलवचनाद्वा क्तिन्निति रक्षित । भाषावृत्तौ तु क्तिनानेन । कथ प्रथना(?)उच्यते । 'क्तिनावादिभ्य' इति

[1] 'कथ प्रथनोच्यते' इत्यस्य स्थाने 'कथमुच्यतनमोच्यत इति पाठोभिति भाति

क्किनि न चैव क्किना बाधितत्वाद् 'अ प्रत्ययाद्' इत्यप्रत्ययो न स्यात् । (या)वता क्किन्नाल्यन्तस्य बाधक, यथा 'व्यवस्थायामसज्ञायाम्' (१ १-३४) इति निर्देशात्। 'स्थागापापचो भावे' (३ ३-९५) इति क्किना नाङ् बाध्यते । ओणादिको वा द्रष्टव्य । कथं 'शोभा', अगुरुमत्त्वात् । उच्यते । 'शुभशुम्भ शोभार्थे' इति निर्देशात्, चकारस्यानुक्तसमुच्चयार्थत्वाद्वा । अथवा घञेवायम् । लोकाश्रयत्वाल्लिङ्गस्य स्त्रीत्वम् । कथं 'पीडा' 'पीड अवगाहन' इति चौरादिक । ततो 'ण्यासश्रन्थ' (३ ३-१०७) इति युचा भा यन् । उच्यते । 'आर्धधातुके' (६ ४ ४६) इति विषयसप्तम्या णिलो लोपे 'गुरोश्च' (३ ३ १०३) इत्यकारप्रत्यय । परसप्तम्या तु वा तेन । 'कुररराजनिर्दयनिपीडनाभयादि'ति माघ ॥

## पिद्भिदादिभ्योऽङ् । १०४ ।

कथम् 'उपलब्धि । लभे पित्त्वात् अङा भा व्यम् । उच्यते । रभे क्किनि रलयोरैक्यस्मरणात् । लभेराबादित्वात् क्किन् । केचित् पुन 'डुलभ प्राप्ताविं'त्य पितमेन पठन्ति । तन्मतेनाव्याहतमेव क्किन् । बाहुल्यात् क्किनिति भाषावृत्ति । कथं 'क्षान्ति' । उच्यते । दैवादिकादपित । कथं 'सपक्ष पराभित्तिहृद्' इति माघो विदारणार्थे, 'अन्यत्र तु भित्ति भिदा विदारणे' इत्येष्टे । उच्यते । प्रायिकम् उपाधिवचनाद्, 'धारा प्रपतने धृतिरन्ये त्यस्य प्रायिकत्वाद् । बहुलवचनाद्वा क्किन् । 'सपक्ष परभेदन' इति पठन्ति । कथं 'भृजान्वया स्नेहमिव स्रवन्ती' इति भट्टि । उच्यते । भिदादेराकृतिगणत्वात् 'चिन्तिपूजिकथिकुम्बिचर्चश्च' (३-३-१०५) इति चकाराद्वा । एव स्पृहा चुरा रुजेति । यद्वा चुरेति 'छत्रादि' (४-४-६२)पाठाद्, आरजेति 'रुजार्थानामि'ति (२ ३-५४) निर्देशात् । मृष्टिरिति 'मृजू शौचालङ्करयोरि'ति चौरादिकात् क्किन् ॥

## आतश्चोपसर्गे । १०६ ।

कथं 'प्रमितो प्रमे'त्यमर । 'श्रीनिर्मितिप्रासघुणक्षतैकवर्णोपमावाच्यमलं ममार्जे'ति माघ । उच्यते । बाहुलकात् क्किनिति भाषावृत्ति ॥

## ण्यासश्रन्थो युच् । १०७ ।

१ 'न चैव' इति एतद्ग्रन्थादौ पाठ्यम् । २ 'परभिन्दर' इत्यपपाठ एव तु कोशयोरस्ति.
३ 'परभेदन' इत्यपि माघव्याख्यात्रा पाठो दृष्ट:.

कथं 'दंष्ट्रातुला' । उच्यते । 'अतुलोपमाभ्याम्' (२-३-७२) इति निर्देशात् । कथं पाचयते 'पाक्ति' । उच्यते । बाहुलकात् ॥

## रोगाख्यायां ण्वुल् बहुलम् । १०८ ।

'वर्णात् कारः' । कथम् 'एवकारः', 'हुंकारेणैव तमि'ति वर्णसमुदायात् कारप्रत्ययः । बाहुलकाद् । वक्षा वा समासः । 'रादिफः' । कथं 'रकारादीन् वर्णानि'ति कल्पपाञ्जिका । उच्यते । क्वचिदपवादविषयेऽप्युत्सर्गः प्रवर्तते ॥

## ल्युट् च । ११५ ।

कथम् 'इतिकरणो विवक्षार्थः'(इति)'तत्र तेनेदमिति सरूपे' (२-२-२७) इत्यत्र वृत्तिः । 'इतिकरणो हेताविति' 'एकाचो द्वे' (६-१-१) इत्यत्र न्यासः । उच्यते । क्रियत इति करणशब्दः । 'कृत्यल्युटो बहुलम्' (३-३-११३) इति ल्युट् । कथं 'स ते करोतु कल्याणं यस्यैते पञ्च भूषणा' इति। उच्यते । 'क्षुधमण्डार्थेभ्यश्च' (३-२-१९१) इति क्षुचि पुलिङ्गोऽयम् ॥

## ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल् । १२६ ।

कथं 'दुर्योधन' इति । उच्यते । केवला‡ण्यत् (?) ॥

## आतो युच् । १२८ ।

कथं 'दुर्विज्ञेयमपि धर्मं श्रद्दधात्युदारधीरि'ति प्रयोगः । वासरूपविधिर्नास्ति, 'क्तल्युट्तुमुन्खलर्थेष्वि'ति वचनात् । उच्यते । दुःखेन ज्ञेयमिति प्रादिसमासः ॥

## लिङ्निमित्ते लृङ् क्रियातिपत्तौ । १३९ ।

कथं 'लज्जा तिरश्चां यदि चेतसि स्यादि'ति । उच्यते । क्रियातिपत्तेरविवक्षितत्वात् । विवक्षा हि शब्दव्युत्पत्तेः प्रधानं कारणमित्युक्तम् ॥

## प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च । १६३ ।

कथम् 'इदानीं करिष्यसि' इदानीमेवेति प्रेषणस्य वृत्तत्वात् कृत्यलोड्भ्यां भवितव्यं सर्वलकारापवादत्वात् । उच्यते । पदसंस्कारे† साधुः । एवं 'श्वो गमिष्यसी'त्यादिरपि साधुः ॥

---

‡ 'ण्यनि' क. पाठः. * 'प्रथम ना' ख. पाठः. † 'रे णिदम्' ख. पाठः.

## माङि लुङ् । १७५ ।

कथं 'मा भवतु तस्याः पापमि'ति । उच्यते । माशब्देऽङिति भविष्यति । कथं 'माच्छादयामी'ति रूपावतारः । उच्यते । पदसंस्कारे ॥

इति शरणदेवविरचितघटंवृत्तौ

तृतीयाध्याये तृतीयः पादः ।

---

## अथ चतुर्थः पादः ।

## धातुसम्बन्धे प्रत्ययाः । १ ।

## समानकर्तृकयोः पूर्वकाले ।२१ ।

कथम् 'अवजानासि मा यस्मादतस्ते न भविष्यति ।
मत्प्रसूतिमनाराध्य प्रजेति त्वां शशाप सा' ॥ इति रघुः ।

तथा 'कूपोदके सुख दृष्ट्वा सद्यस्तुष्यति केशव ' । 'स्नात्वा सुखं भवति' । 'मासेन भुक्त्वा तुष्टिः स्यात्' । भिन्नकर्तृकत्वात् । उच्यते । स्थितस्येत्यध्याहार्यमिति भाषावृत्तिः । यद्वा 'अनाराध्ये'ति तु हेतुमण्णिजन्तात् । प्रजैव प्रयोजककर्त्री । कथं 'केशेषु केशेषु गृहीत्वा इदं युद्धं प्रवृत्तम्' । उच्यते । वृतेरन्तर्भावितण्यर्थत्वाद्युद्धमित्यभिहितं कर्मेति समानकर्तृकतेति रक्षित । कथं 'कणेहत्य पय. पिबति', 'उदर पूरयित्वा भुङ्क्ते', समानकालत्वात् । उच्यते । 'कणेहत्य' इत्यत्राभिलापनिवर्तनानन्तरं यत्पान तदपेक्षया पूर्वकालत्वादिति 'कणेमनसी' (१-४ ६६) इत्यत्र रक्षित' । 'चक्षुषी निमील्य स्वत्यौपुपसङ्ख्यानादि'ति[1] भाषावृत्ति । कथं 'कृत्वा विप्रकुलं व्रजती'ति, नपुंसकह्रस्वत्वप्रसङ्गात् । उच्यते । तुमर्थेऽस्य विधानात् कर्तृक्लीबत्वस्याविधानाद् गुणत्वादिति रक्षित । यद्येवं 'समासेऽनञ्पूर्वे' (७-१-३७) इत्यत्र न्यासे कर्तरि क्त्वाप्रत्यय उक्त । परम कृत्वेति समानाधिकरणनिर्देशपरतादेति रक्षितः । कथं 'पूर्वापरौ वारिनिधी विगाह्य स्थित' इति । अपूर्वकालत्वात् । उच्यते । स्थित- स्थिर इत्यर्थ । ऊर्ध्वं स्थित इति पुरुषोत्तमदेव- ॥

---

१. 'चक्षुषी निमील्य हसतीत्याद्युपसङ्ख्यानमपूर्वकालत्वाद्' इत्येवमात्मकादित्यर्थ. । 'आस्यं व्यादाय स्वपिति चक्षुषी सम्मील्य हसतीत्युपसङ्ख्यानमपूर्वकालत्वाद् इति काशिका

## अन्यथैवंकथमित्थंसु सिद्धाप्रयोगश्चेत् । २७ ।

कथम् 'अन्यथा कृत्वा गत.' । तथा 'कथं कृत्वे'ति । अनेन णमुल्भावात् । उच्यते । 'कथं कृत्वा चोदितम्' । 'अन्यथा कृत्वा परिहृतम्' इति भाष्याद् वासरूपविधिना वा । स्त्र्यधिकारात् परेण वासरूपविधि प्रायिक इति रक्षित' ॥

## कषादिषु यथाविध्यनुप्रयोगः । ४६ ।

कथम् 'अपुषत् स्वपोषमि'ति भट्टि , यतोऽनुप्रयोग पश्चात्प्रयोग । अनु॰ शब्दोऽयं समीपगची । 'अनुर्यत्समया' (२-१-१५) इतिवत् ॥

## कर्तरि कृत् । ६७ ।

कथं * स्वस्थे फो वा न पण्डित ' । स्वास्थ्य इत्यत्रार्थ । 'सुपि स्थ' (३-२-४) इत्यत्र सुपीति योगविभागात् क । 'आखूत्थ वर्तत' इति वत् । 'सुं-स्थे(१)क्रो वे'ति पाठ ॥

## तयोरेव कृत्यक्तखलर्थाः । ७० ।

कथं 'फलानामाशित ' इति 'पूरणा दि (२ २ ११) सूत्रे वृत्ति । अ-श्नाते सकर्मकत्वात् कर्तरि क्तो न स्यात् । उच्यते । 'आशित कर्ता' (६-१—२०७) इति स्वरसूत्रे निपातनात् कर्तरि क्त इति भाष्यम् । अविवक्षितकर्मत्वाद् कर्मकत्वे कर्तरि क्त । आङ्पूर्वत्वात् दीर्घ इति वृत्ति । एव 'गुरौ भक्त' इत्यादौ गुरौ कर्मणोऽधिकरणत्वेन विवक्षितत्वादकर्मकत्वे कर्तरि क्त । भक्तियोगाद्वा अर्शआद्यजन्त । एव 'भुक्ता ब्राह्मणा' । 'वनाय पीतप्रतिबद्धवत्सामि'त्यजन्त । 'पीतप्रतिबद्धे'त्यत्र पितरर्थोन्तर्भाविनर्थ । पायित इत्यर्थ । कथं 'भवितव्यप्रि-यसङ्गम वपुरि'ति कुमार , कर्मणोऽभावात् । उच्यते । 'भू प्राप्तावि'त्यस्य 'आ-धृषाद्वे'त्यण्यन्तस्य रूपम् । कथं 'शयनीय जय्ये'ति । उच्यते । 'कृत्यल्युटो बहु-लम्' (३-३-११३) इत्यधिकरणे । कथं 'सोमनाथवन्तुमद नतो जगदीश्वरमि'ति, 'कृष्ण श्रित' इति कर्तरि क्त । उच्यते । नमन हि गतिभेद इति वैशेषिका , यदाहु — 'भ्रमणाकुञ्चनप्रसारणोर्ध्वज्वलननमनाद्यो गतिविषया' इति । सेवा प्यर्थगतेरेवाश्रयणात् माप्तिगतिरेवेति 'गत्यर्थाकर्मक' (३-४ ७२) इत्यादिना क्त ॥

१ 'सुस्थे' इति वा 'स्वास्थ्ये' इति वा पाठो भवेत् ।

* 'सुस्थे' ? (?) स पाठ ।

## टित आत्मनेपदानां टेरे । ७९ ।

**कथं** 'कर्त्तारौ कर्त्तार' इति न टेरेत्त्वम् । उच्यते । कृतटेरेत्वस्य आदेशौ जातौ । लक्षणाभावात् । यद्वा 'थासः से' (३-४-८०) इत्यत्र सकारादेशे कर्तव्ये एकारान्तादेशो ज्ञापयति आदेशादेशानां टेरेत्वं नेति । शेरते श्रयन्त इत्यत्र तु लादेशस्यैकदेशादेश इति टेरेत्वम् । एत्वे कृते वा अदादेशः ॥

## एरुः । ८६ ।

**कथं** लोटि 'जयती'ति प्रक्रिया । अनभिधानादिति केचित् । न, भाष्यादौ प्रत्ययानुक्तत्वात्, 'जयतु जयतु भट्टा' इति नें(मि) सन्धाने[1] दर्शनात् । नच प्राकृतानुशासनमस्ति । किञ्च तुशब्दस्थानिकस्तातङ् च दृश्यते ।

'उत्पन्नसर्वमाङ्गल्यो नष्टनिश्शेषचेष्टितः ।
न्यायगम्यनयः कोपि जयताद्राज्ञो महाचरः' ॥

## नित्यं ङितः । ९९ ।

**कथं** 'मातः! किं विदधाम' इति कुट्टनीमतं, 'लोटो लङ्वत्' (३-४-८५) इत्यतिदेशेन 'नित्य ङित' इति सलोपप्रसङ्गात् । उच्यते । 'लोटो लङ्वदि'त्यत्र वृत्तौ 'विदो लटो वा' (३-४-८३) इत्यतो वाग्रहणानुवृत्तेरडादिव्यावृत्त्यर्थं व्यवस्थितविभाषाश्रयणादत्रापि न सलोपः । सलोपे च 'पदान्तेषु बहुलमि'ति गुरुत्वे द्विमात्रता । 'विदधीमहि' इति वा पाठः कर्त्तव्यः ॥

## यासुट् परस्मैपदेषूदात्तो ङिच्च । १०३ ।

**कथं** 'जिघांसन्तं जिघांसीयादि'ति. जिघांसधातोर्लिङि तिपि यासुटि जिघांस्यादिति स्यात् । उच्यते । 'जिघांसी'त्यावश्यके णिनिः । 'इयादि'तीण्धातोर्लिङ् ॥

इति शरणदेवविरचितदुर्घटवृत्तौ
तृतीयाध्याये चतुर्थः पादः ॥

---

१ नें(मि)सन्धान नाम किमपि प्राकृतकाव्य स्यात्.

## अथ चतुर्थाध्याये प्रथमः पादः ।

### ङ्याप्प्रातिपदिकात् । १ ।

### अजाद्यतष्टाप् । ४ ।

कथं 'त्वं ब्राह्मणी'ति, त्वादेशे लोपे च टाप्प्रसङ्गात् । उच्यते । 'अलिङ्गे युष्मदस्मदी' इति भाष्यात् । कथं तर्हि 'युष्मदस्मत्तिङव्ययमि'ति लिङ्गादिसंग्रहे त्रिलिङ्गकाण्डशेषे अमरः । उच्यते । लिङ्गसामान्यपरं हि तत् । अथवा 'शेषे लोप' (७-२-९०) इति टिलोपो व्याख्येयः । तदुक्तं—'टिलोपष्टाबभावार्थः कर्तव्य' इति । 'भ्यसोऽभ्यम्' (७-१-३०) अभ्य वा कार्यः । कथं 'वृत्तौ' 'हनावि'त्यत्रादादेशे न टाप् । सन्नियोगविधानादिति चेन्न, सर्वनामविष(व योविदि ? यर्वदिह) सन्नियोगाभावात् । उच्यते । 'अच घेः' (७-३-११९) इति तपरनिर्देशो लक्षणान्तरायातदीर्घनिवृत्त्यर्थः । तेन टाब् भावी न भविष्यतीति भावः । 'गर्भवद्वाबादयो भवन्ती'ति ज्ञापकतुल्यत्वाद् असर्वविषयत्वात् । भाष्यकारस्तु सन्निपातलक्षणपरिभाषायामाह—का सेत्यत्र सन्निपातलक्षणपरिभाषा न क्रियते, 'न यासयोः' (७-३-४५) इति निर्देशात् । क्तिनोक्तत्वादिति नोच्यते[1], भाषाशब्दे 'गुरोश्च हलः' (३-३-१०३) इत्यकारप्रत्ययेनोक्तत्वात् टापोऽभावप्रसङ्गात् ॥

### ऋन्नेभ्यो ङीप् । ५ ।

कथं 'नप्ता कुमारी' । उच्यते । भागवृरिकृन्नप्तृशब्दं स्वस्रादौ पठितवान् । तेन 'न षट्स्वस्रादिभ्यः' (४-१-१०) इति ङीपो निषेधः । कथं तर्हि 'नप्त्री पौत्री सुतात्मजे'त्यमरः । उच्यते । ये स्वस्रादौ न पठन्ति तन्मतेन ॥

### उगितश्च । ६ ।

कथं 'करिष्यमाणा पचमाना ब्राह्मणी' । उगिल्लक्षणष्टिल्लक्षणश्च ङीप् प्राप्नोति । उच्यते । यासुटो ङित्त्वेन ज्ञापितं लकाराश्रयं चानुबन्धाश्रयं च कार्यं लादेशे न स्वीक्रियते ॥

### टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः । १५ ।

कथं 'सहचरीमशङ्कः पुरुषायुषमि'ति भट्टि, अधिकरणोपपदाभावात् । 'चरेष्ट' (३-२-१६) इत्यस्याभावे पचाद्यच् । उच्यते । 'भिक्षासेना-

1. नोच्यत इति वृत्तावियादौ टारभारः शीलस्य क्तिनोक्तत्वादिति केश्चिदुच्यमान समाधानमस्माभिर्नोच्यत इत्यर्थः ।

दायेषु च' (३-२-१७) इति चकारस्यानुक्तसमुच्चयार्थत्वाट्टप्रत्यय इति जयमङ्गला। गौरादिपाठादित्यन्यः । कथं 'मधुपी भ्रमरी' । 'गापोष्टक्' (३-२-८) इत्यत्र 'सुराशीध्वोः पिबतेः' इति नियमात् टगभावे मूलविभुजादित्वात् कः, ततश्च टाप्प्रसङ्गात् । उच्यते । 'जातेरस्त्रीविषयाद्' (४-१-६३) इति ङीप् । कथं 'त्वं श्रीस्त्वमीश्वरी'ति चण्डी । 'स्थेशभासे' (३-२-१७५) ति वरचि टापा भाव्यम् । तथा च भारविः—'विन्यस्तमङ्गलमहौषधिरीश्वराया' इति । उच्यते । 'अश्नोतेरा-शुकर्मणि' इति वरटि 'ईचोपधायाः' इत्यनुवृत्तेरीत्ये ङीप् । कथं लवणा यवागूः । 'लवणाल्लुग्' (४-४-२४) इति ठको लुकि ङीप् स्यात् । उच्यते । अत इत्यनु-वृत्तस्य टिदादिभिर्विशेषणाद् धर्माश्रयाद् वर्णाश्रयविधौ प्रत्ययलक्षणं नास्तीति ङीब-भावः । एवं 'श्रवणा रात्रि'रिति । श्रवणेति 'विभाषा फाल्गुनीश्रवणे' (४-२-२३)ति सूत्रनिर्देशादपि । कथं 'किङ्करा स्त्रियः' । 'कृञो हेतुताच्छील्ये' (३-२-२०)ति विधानात् । तामैक्षन्त क्षणं सभ्या दुश्शासनपुरस्सराम्' इति भारविः, 'पुरोऽग्रतोऽग्रेषु सर्तेः' (३-२-१८) इति विधानात् । उच्यते । पचाद्यच् कार्यः पदसंस्कारे ॥

## कौरव्यमाण्डूकाभ्यां च । १९ ।

कथं 'यद्यसौ कूपमाण्डूकि तवैतावति कः स्मयः' इति भट्टिः । अत्र कौरव्य-साहचर्यादपत्यप्रत्ययान्तो माण्डूकः माण्डूकायनीति युज्यते । उच्यते । मण्डूकस्य भार्येति 'तस्येदम्' (४-३-१२०) इत्यर्थे । जयमङ्गलाया तु 'ढक् च मण्डूकाद्' (४-१-११९) इति चकारादुक्त ॥

## वयसि प्रथमे । २० ।

कथं 'बालामबालेन्दुमुखीं बभाषे' इति रघुः । उच्यते । अजादिपाठात् । एवं वत्सा । कथं 'कन्ये'ति । 'कन्यायाः कनीन च' (४-१-११६) इति निर्देशात् ॥

## षिद्गौरादिभ्यश्च । ४१ ।

---

१. 'क्लिशेरीच्चोपधायाः कन् लोपश्च लो नाम् च' इति उणादिसूत्रम्. २. विधानादिति 'दिवाविभे'त्याद्युत्तरसूत्रस्याहेत्वादिविषयत्वाद् अहेत्वादौ च किंयत्तद्बहुषु कृञोऽज्विधानम्' इति वचनेन सूत्रबाधकेनाच एव प्राप्त्या किङ्कराशब्दे टाप् साधुरेवेत्याशय. ३. 'ताम्' इत्यतः पूर्वं 'मूलविभुजादित्वात् कः' इति किमपि वाक्यं प्रकृतासम्बद्धं पठ्यते मूलकोशयो.

कथं 'त्रपा क्षमा' यथा स्तनन्धयीत्यत्र धेटष्टित्त्वाद् ङीप्, तथा पित्त्वात् तत्र ङीप् स्यात् । उच्यते । पित्त्वस्याङ्विधौ चरितार्थत्वात् समुदायार्थत्वानुपपत्तेः ॥

## वोतो गुणवचनात् । ४४ ।

कथम् 'अनन्यगुर्व्यास्तव केन केवलः' इति माघः । अनेन ङीपि समासे 'नद्यृतश्च' (५-४-१५३) इति कप् स्यात् । उच्यते । ङीपोऽभावपक्षे अनन्यगुर्वा इति पाठः'। समासान्तानित्यत्वाद्वा । भो अनन्य! । विष्णोः सम्बोधने, 'सर्वमिदं जनार्दनः' इति दर्शनात् ॥

## बाह्वादिभ्यश्च । ४५ ।

'कृदिकारादक्तिनः', 'सर्वतोऽक्तिन्नर्थादित्येके' । कुट्टनीमते 'वञ्चकवृत्त्यो वेश्या.', अक्तिन इति निषेधात् । उच्यते । वृतेः 'इक् कृष्यादिभ्य' इतीगन्तात् । यद्वा 'वञ्चकवृत्ता' इति पाठ. । (विसर्गश्रवणार्थः ?) ॥

## इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणामानुक् । ४९ ।

कथं 'ब्रह्माणी' । ब्रह्माणमनितीति अनितेः कर्मण्यण् । एवं राजकुलानी । 'ब्राह्मी तु भारती भाषा' इत्यमरः । तस्येदमर्थे अणि 'ब्राह्मोऽजातौ' (६-४-१७१) इति लोपः । कथं 'भिक्षुणी' । उच्यते । भिक्षु भिक्षुत्व नयति प्राप्नोतीति क्विपि 'कृदिकारादक्तिन' इति ङीप् ॥

## क्तादल्पाख्यायाम् । ५१ ।

कथम् 'अक्षरलवाक्षिप्ता जिह्वा' । उच्यते । लवशब्देनाल्पत्वस्योक्तत्वादिति रक्षितः ॥

## स्वाङ्गाच्चोपसर्जनादसंयोगोपधात् । ५४ ।

कथं 'शुभाङ्गी' । उच्यते । चकारात् ॥

## न क्रोडादिबह्वचः । ५६ ।

कथं 'कल्याणक्रोडी' । उच्यते । क्रोडाशब्दोऽत्रोपात्त इति न्यास उक्तम् । तेन क्रोडशब्दात् कल्याणक्रोडीति रक्षित. ॥

ऊङुतः । ६६ ।

कथं 'सपदि वारिधरारवभीरवः' इति माघः । तथा 'विशेषास्त्वङ्गना भीरुः कामिनी वामलोचने'त्यमरः । उच्यते । 'इतो मनुष्यजातेः' (४-१-६५) इत्यनुवृत्तौ (तद) विवक्षायां नोङ् ॥

ऊरूत्तरपदादौपम्ये । ६९ ।

कथं 'पीवरोरु! पिबतीव बर्हिणः' इति कुमारः । औपम्याभावादूङोऽप्रवृत्तेः । उच्यते । 'संज्ञापूर्वको विधिरनित्यः' इति गुणाभावात् । 'अप्राणिजातेश्चारज्ज्वादीनामुपसङ्ख्यानम्' इति ऊरुशब्दादूङि च बहुव्रीहिः ॥

द्विगोर्लुगनपत्ये । ८८ ।

कथं 'पाञ्चकपालो भागः' । कथं पाञ्चकपालीयमिदम्' । उच्यते । विभाषानुवृत्तेर्व्यवस्थितविभाषात्वात् । 'चातुरर्थिकस्त्रैवर्णिक' इति अध्यात्मादिपाठसामर्थ्यात् । चातुरर्थिक इति 'कथादि'(४-४-१०२)पाठबलादिति राक्षितः । 'चातुर्विद्य' इति द्विगुत्वात् । चतुर्विधा विद्या इति विवक्षितः । 'चतस्र एव विद्याश्चातुर्वैद्यमि'ति । 'अनुशतिकादि'(७-३-२०)त्वात् । प्राग्दीव्यतीयत्वाद्वा ॥

अत इञ् । ९५ ।

कथं वसुदेवस्यापत्यं 'वासुदेवः' । उच्यते । 'ऋष्यन्धकवृष्णिकुरुभ्यश्च' (४-१-११४) इत्यण् वृष्णित्वात् । कथं 'शौरिः' । 'बाह्वादि'(४-१-९६)त्वादिञ् काचिदपवादविषयेऽप्युत्सर्गप्रवृत्तेर्वा । एवं सावर्णिरिति ॥

स्त्रीभ्यो ढक् । १२० ।

कथं 'ज्ञातेयं कुरु सौमित्रे! भयात् त्रायस्व राघवम्' इति भट्टिः । उच्यते । बाह्वादित्वादिञ् । कथं 'सापत्नो भ्राते'ति । उच्यते । शिवाद्यण् (४-१-११२) ॥

द्व्यचः । १२१ ।

कथं 'पार्थो धनञ्जयः', पृथाशब्दात् शिवाद्यण ॥

कौसल्यकार्मार्याभ्यां च । १५५ ।

कोसलशब्दात् मूलप्रकृतेरेवापत्ये फिञ्प्रत्ययसान्नियोगेन युडागम इति

---

१. ऊरुशब्दः स्त्रीलिङ्गेऽपि । तथा च वैजयन्त्यां स्त्रीलिङ्गेषु पाठः 'शाटीरेणुहरेणूरुजलूकाकोलिधूलयः' इति । 'सक्थि क्लीब पुमान् बाहः' इति च. २. प्राग्दीव्यतीयत्वादिति. छुक इति शेषः

वृत्तिः । कथं तर्हि 'उपलभ्यामपश्यन्तः कौसल्यायनिवल्लभाम्' इति भट्टिः । न ह्यसौ कोसलस्यापत्यमिति रक्षितः । उच्यते । 'इतो मनुष्यजातेः' (४-१-६५) इति ङीषन्तात् कौसल्यायनीशब्दाद् युवापत्ये ढकि तस्य 'अब्राह्मणगोत्रमात्राद्युवप्रत्ययस्योपसङ्ख्यानमि'ति लुकि 'लुक् तद्धितलुकि' (१-२-४९) इति स्त्रीप्रत्ययनिवृत्तौ ॥

## जनपदशब्दात् क्षत्रियादञ् । १६८ ।

कथं 'केकय्युपज्ञं बत बह्वनर्थम्', 'ऊचुस्तथान्ये भरतस्य मायां धिक् केकयीमि'ति भट्टिः । तथा 'प्राक् केकयीतो भरतस्ततोऽभूदि'ति । केकयस्यापत्यं स्त्रीति अनेनाञि 'अतश्च' (४-१-१७७) इति लुकौ 'न प्राच्यभर्गादियौधेयादिभ्यः' (४-१-१७८) इति निषेधे 'केकयमित्रयुप्रलयानाम्' (७-३-२) इतीयादेश आदिवृद्धौ कैकेयीति स्यात् । तथा च रघुः 'कैकेयि ! कामाः फलितास्तवे'ति । उच्यते । केकयशब्दो मूलप्रकृतिरेवोपचारात् स्त्र्यपत्ये वर्तते इति न्यासः । शार्ङ्गरवादिषु पठ्यते । तेन ङीन् ॥

## वृद्धेत्कोसलाजादाञ्ञ्यङ् । १७१ ।

'पाण्डोर्जनपदात् क्षत्रियात् ड्यण् वक्तव्य' इति ड्यणि कथं पाण्डवाः । तस्येदमर्थे अण् ॥

इति शरणदेवविरचितदुर्घटवृत्तौ
चतुर्थाध्याये प्रथमः पाद ।

---

अथ द्वितीयः पादः ।

## तेन रक्तं रागात् । १ ।

## लुबविशेषे । ४ ।

कथम् 'अद्य रात्रौ पुष्य' इति । पौषी रात्रिरितिवद्विशेषविहितत्वाल्लुपा न भावितव्यम् । उच्यते । अन्तरङ्गत्वाद्धि*शेष्येण सामानाधिकरण्ये अविशेष इ[illegible] निषेध इति रक्षितः ॥

## आग्रहायण्यश्वत्थाट्ठक् । २२ ।

---

* 'शेषेण' पा.पाठः.

कथम् 'आग्रहायणो मासः'। 'आग्रहायणी पौर्णमासी'। 'सास्मिन्नि'(४-२-२१)त्यनुवृत्तौ नित्यं ठको भावात्। उच्यते। आग्रहायण्या अयमिति तस्येदमर्थे अण्। पूर्वनिपातव्यभिचाराद्वा ठकोऽनित्यत्वादौत्सर्गिकोऽण्॥

## सास्य देवता। २४।

कथम् 'ऋद्धं हि राज्यं पदमैन्द्रमाहुः' इति रघुः। यावता देवतासम्प्रदानविषयेऽण् इष्यते। उच्यते। तस्येदमर्थे भविष्यति॥

## सोमाट्ट्यण्। ३०।

कथम् 'अपेतयुद्धाभिनिवेशसौम्य' इति, सास्य देवता (४-२-२४) इत्यनुवृत्तेः। उच्यते। सोमदेवता हि तृप्तिहेतुः। अतः सुकुमारोऽपि तृप्तिहेतुत्वाद् उपचारात् सौम्य इत्युच्यते। तथा च 'सौम्यस्स्यात् सुकुमारे सोमदैवत'[1] इत्यमरः॥

## सङ्ग्रामे प्रयोजनयोद्धृभ्यः। ५६।

कथं 'भारतो ग्रन्थः' सङ्ग्रामे विधानात्। उच्यते। भारतान् 'अधिकृत्य कृते ग्रन्थे' (४-३-८७) इत्यण्। ग्रन्थानां भूयस्त्वेन महाभारतम्॥

## क्रतूक्थादिसूत्रान्ताट्ठक्। ६०।

कथं 'चातुर्विद्यः'। उक्थादित्वात् ठका हि भाव्यम्। उच्यते। कृतलब्धक्रीतकुशलार्थे अणो 'द्विगोर्लुगनपत्ये' (४-१-८८) इति न लुक्, चतुर्विधा इति मध्यमपदलोपिसमासत्वादद्विगुत्वात्। अत एव 'विद्या चानङ्गक्षत्रधर्मत्रिपूर्वे'[2]-त्युक्थादिगणसूत्रे प्रत्युदाहरणे वृत्तौ त्रैविद्य इत्युक्तम्। अध्येतरि चातुर्विधिक इति ठको गणपाठा(दिति ? दपि) न लुक्॥

## कुमुदनडवेतसेभ्यो ड्मतुप्। ८७।

कथं 'पुरीं माहिष्मतीं द्विष' इति माघः। 'महिषाच्चेति वक्तव्यमि'त्यनेन ड्मतुपि महिष्मतीति स्यात्। महिष्मत्या साध्यं भावे (?) अर्थेऽण्[3]॥

## कुलकुक्षिग्रीवाभ्यः श्वास्यलङ्कारेषु। ९६।

---

१. 'सुन्दरे सोमदेवते' इति तु अमरकोशे पाठः. २. 'विद्या च नाङ्गक्षत्रधर्मसंसर्गत्रिपूर्वा' इति वृत्तिः. ३. 'महिष्मत्यास्तत्र भवेऽर्थेऽण्', इति पाठः स्यात्.

कथं 'सरलासक्तमातङ्गग्रैवेयस्फुरितत्विषः' इति रघुः । अनेन ढकञि ग्रैवेयकमिति स्यात् । उच्यते । 'ग्रीवाभ्योऽण् च' (४-३-५७) इति ढकञि ग्रैवेयकम्, अणि तु ग्रैवेयमिति भवति ॥

## द्युप्रागपागुदक्प्रतीचो यत् । १०१ ।

कथं 'प्रपेदिरे प्राक्तनजन्मविद्या' इति कुमारः, अनेन यतो भावात् । उच्यते । अव्ययात् कालवचनाद् अस्माद् परत्वात् ट्युट्युलाविच्छन्ति । कथं तर्हि 'प्राच्यासु वृत्तिष्वि'ति शास्त्रारम्भे न्यासः । उच्यते । साध्वर्थे यता ॥

## इञश्च । ११२ ।

कथं 'पाणिनीयं शास्त्रम्' । पणिनोऽपत्यमित्यण् । 'गाथिविदथिकेशिगणिपणिनश्च' (६-४-१६५) इति प्रकृतिभावे पाणिनशब्दादपत्यार्थे इञि पाणिनिना प्रोक्तमित्यर्थे त्वनेनाणा भाव्यम् । उच्यते । अणतो नास्ति गोत्राधिकारात् । 'वृद्धस्य च पूजायाम्' (४-१-१६५) इति युवसंज्ञया चात्र गोत्रसंज्ञा बाध्यते । तथा च 'प्रोक्ताल्लुक्' (४-२-६४) इत्यत्रोक्त—'पाणिनिना प्रोक्तमित्यर्थे वृद्धाच्छे पाणिनीयमि'ति । यद्वा पाणिनेन प्रोक्तमित्यणन्तादेव च्छः । पाणिनिरपि पणिनोऽपत्यं भवत्येव ॥

## वृद्धाच्छः । ११४ ।

कथं 'कातीयश्रेष्ठसिद्धम' इति, कतशब्दस्यावृद्धत्वात् । उच्यते । कतशब्दाद् गर्गादिपाठाद्यञ् । 'यञिञोश्च' (४-१-१०१) इति फकि कात्यायनशब्दाद् 'वृद्धाच्छ.' (४-२-११४) इति च्छे विषयीभूते 'फक्फिञोरन्यतरस्याम्' (४—१-९१) इति फको लुक् कातीयः कात्यायनीय इति ॥

## धूमादिभ्यश्च । १२७ ।

कथं "दाक्षिणापथी वृत्तिः" । शेषे धूमादित्वाद् वुञि दाक्षिणापथिकेति भाव्यम् । उच्यते । क्वचिदपवादविषयेऽप्युत्सर्गः प्रवर्तत इति तस्येदमर्थेऽण् ॥

## मनुष्यतत्स्थयोर्वुञ् । १३४ ।

कथं 'सैन्धवो मनुष्यः' कच्छादौ सिन्धुशब्दोक्त्यानुवृत्तौ अनेन वुञि सैन्धवक इति हि स्यात् । उच्यते । अभिजनेऽर्थे 'सिन्ध्वपकराभ्यां कन्' (४—३-३२) इति मनुष्यवृत्तेः 'अणञौ च' (४-३-३३) इत्यणि अञि'वा सैन्धवः ॥

## गहादिभ्यश्च । १३८ ।

कथं 'लुव्योगाप्रख्यानाद्' (१-२-५४) इत्यत्र 'स्वकीयस्य प्रत्याख्यानमि'ति न्यासः, यतः 'कुक् जनस्य परस्य चे'त्युक्तं वृत्तौ । उच्यते । अत एव न्यासात् स्वार्थिककन्प्रत्ययान्तस्वकशब्दोऽत्र द्रष्टव्यः । परस्य चेति चकाराद्वा स्वशब्दस्यापि कुक् । तथा च चान्द्रं सूत्रं—'स्वपरजनदेवराज्ञां कुक् चे'ति । केवलात्तु स्वशब्दाद् आणि सौवमिति । तथा 'द्वारादीनां च' (७-३-४) इत्यत्र वृत्तौ सौवमित्युदाहृतम् । 'स्वीयमि'ति तु 'तस्मै हितम्' (५-१-५) इत्यर्थे 'प्राक् क्रीताच्छः' (५-१-१) । 'नान्तरीयक'शब्दस्यान्तराशब्दाद् गहादित्वेन च्छप्रत्यये नञ्समासे स्वार्थिकः कन् । पाठसामर्थ्यात् नञः प्रकृतिभावः ॥

इति शरणदेवविरचितदुर्घटवृत्तौ

चतुर्थोऽध्याये द्वितीयः पादः ।

अथ तृतीयः पादः ।

## युष्मदस्मदोरन्यतरस्यां खञ् च । १ ।

## कालाट्ठञ् । ११ ।

कथम् 'अनुदितौपसराग' इति किरात. । तथा 'शार्वरस्य तमसो निपिद्धये' इति कुमारः । उच्यते । कालादिति योगविभागादण् । 'विभाषा रोगातपयोः' (४-३-१३) इति विभाषानुवृत्तेर्व्यवस्थितविभाषात्वाद्वाण् । 'क्वचिदपवादविषयेऽपी'ति वा तस्येदमर्थे अण् । वृत्तिकारा*दिभिः प्रतिपादितत्वात् प्रागुक्त एव वा ॥

## सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च । २३ ।

कथं 'साम्प्रतिकाभावे भूतपूर्वगतिरि'ति । उच्यते । 'अ साम्प्रतिक' (४-३-९) इति निर्देशात् । अध्यात्मादित्वाट्ठञ् । 'इसुसुक्तान्तात् कः' (७-३-५१) इत्यपि नास्ति, अत एव निर्देशादिति 'येषां च' (२-४-९) इत्यत्र रक्षितः । कथं 'शाश्वतस्तु ध्रुवो नित्य' इत्यमरः। 'कालादि'ति योगविभागादण् । 'अव्ययानां

* 'रायप्रति' ख,पाठः.

भमात्रे टिलोप' इत्यपि नास्ति, 'बहिषष्टिलोप' इत्यनेनास्यानित्यत्वज्ञापनात् । कथम् अकस्माद्भवमाकस्मिकम् । उच्यते । अकस्माच्छब्दाद्विभक्तिप्रतिरूपकान्निपातादध्यात्मादिपाठाट्ठञि टिलोपः । कथं 'दधतः पुरातनमुनेर्मुनितामि'ति (माघः!) 'पुराणप्रोक्तेषु' (४-३-१०५) इत्यनेन ख्युट्ख्युलोर्बाधात् । उच्यते । 'अबाधकान्यपि निपातनानि भवन्ती'ति ख्युट्ख्युलौ च । 'बाधकान्येव निपातनानि भवन्ती'ति भाष्ये स्थितम् । 'पुरातनमुनेरि'त्यादयः कालदुष्टा एवापशब्दा इति भागवृत्तिः । नैतत् तथा, यतः 'पूर्वपदात् संज्ञायामगः' (८-४-३) इत्यत्र भाष्य एवोक्तम् 'अणृगयनादिभ्य' (४-३-७३) इति निपातनादृगयनमिति सिद्धे 'अग' इति प्रतिषेधो ज्ञापयति अबाधकान्यपि निपातनानि भवन्तीति । तथा च जाम्बवतीविजये पाणिनिनोक्तम् —

'अस्ति प्रतीच्यां दिशि सागरस्य वेलोर्मिगूढे हिमशैलकुक्षौ ।
पुरातनी विश्रुतपुण्यशब्दा महापुरी द्वारवती च नाम्ना' ॥

इति द्वितीयसर्गे,

'अनेन यात्रानुचितं धराधरैः पुरातनं साजलतं महीक्षिताम् ।
ददर्श सेतुं महतो जरन्तया विशीर्णसीमन्त इवोदयश्रिया' ॥ (!)

इति चतुर्थे,

'त्वया सहार्जितं यच्च यच्च सख्यं पुरातनम् ।
चिराय चेतसि पुरस्तरुणीकृतमद्य मे' ॥

इत्यष्टादशे । कैयटेन तु पृषोदरादित्वात् सिद्धिरुक्ता । 'सर्वादीनि सर्वनामानि' (१-१-२७) इत्यत्रोक्तम् ॥

## द्व्यजृद्ब्राह्मणर्क्प्रथमाध्वरपुरश्चरणनामाख्याताट्ठक् । ७२ ।

कथं शाले भवं 'शालीयं', द्व्यच्त्वात् ठको भावात् । उच्यते । 'तत आगतः' (४-३-७४) 'तस्येदम्' (४-३-१२०) इति वाण् । तदन्ताच्छः । एवं वार्तमिति च ॥

## अधिकृत्य कृते ग्रन्थे । ८७ ।

कथं 'ज्योतिषं' शास्त्रम्, अनेनाणि वृद्धिसम्भवात् । उच्यते । संज्ञापूर्वविधेरनित्यत्वाद् वृद्ध्यभाव इति सुमतिः । ज्योतींषि नक्षत्राणि अस्य सन्ति गणनी-

१. माघ इत्यसङ्गतम् । 'किरातः' इति पाठ्यम् ।

यत्वेनेत्यर्शआद्यच् । साहचर्यात्तु[1] वासवदत्ताख्यायिकेति भाषावृत्तिः । 'लुबाख्यायिकाभ्य' इत्यणो लुकि वा ॥

## नित्यं वृद्धशरादिभ्यः । १४४ ।

कथं 'पुरीं द्रक्ष्यथ काञ्चनीमि'ति भट्टिः, 'काञ्चनी वासयष्टिरि'ति मेघः, वृद्धसंज्ञकत्वान्मयटा भाव्यम् । तथा च श्रीगोविन्दे 'तेनेदं काञ्चनमयं निर्मितं पुरमुत्तममि'ति वाल्मीकिः । उच्यते । 'क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशत' इति । 'अनुदात्तादेश्च' (४-३-१४०) इत्यत्रापीति 'जातरूपेभ्यः' (४-३-१५३) इत्यत्र मैत्रेयः । कथं 'जगतोऽस्य जगन्मये'ति चण्डी । मयटि ङीपा भाव्यम् । उच्यते । जगन्मयते जानातीति मयधातोः पचाद्यच् । अजादेराकृतिगणत्वाट्टाप् । कथम् 'आप्यमम्मयमि'त्यमरः । 'नित्यमेकाचो मयटमशरादेरपीच्छन्ती'ति वचनाद् वाङ्मयमित्यादिवदप्शब्दान्नित्यं मयटा भाव्यम् । उच्यते । आप्यमिति प्रमादपाठ इति व्याख्यानशीलः । 'तद्धिताः' (४-१-७६) इति बहुवचननिर्देशादनित्य इत्यन्यः ॥

इति शरणदेवविरचितदुर्घटवृत्तौ
चतुर्थाध्याये तृतीयः पादः ।

---

## अथ चतुर्थः पादः ।

## प्राग्वहतेष्ठक् । १ ।

## समानोदरे शयित ओ चोदात्तः । १०८ ।

## सोदराद्यः । १०९ ।

कथं 'सहोदरस्यातिमदोद्धतस्ये'ति भट्टिः, कथम् 'अपन्थानं तु गच्छन्तं सोदरोऽपि विमुञ्चति' इति । 'विभाषोदरे' (६-३-८८) इति सभावेन सोदर्य इत्येव हि स्यात् । उच्यते । 'समानस्य च्छन्दसी'(६-३-८४)त्यत्र योगविभागेन साधुरिति सोमनन्दी । यद्वा सहशब्दः समानार्थः । तथा च प्रयोगः— 'सर्वे ते सह

---

१. साहचर्यादिति । साहचर्यमूलकाभेदोपचारेण ताच्छब्द्यादित्यर्थः । 'लुबाख्यायिकाभ्य' इति नापूर्वं वचनं, किन्तु ताच्छब्द्यन्यायसिद्धार्थपरमिति भागवृत्त्यभिप्रायः ।

जायन्त' इति । तेन सह समानमुदरमस्येति 'वोपसर्जनस्य' (६-३-८२) इति सभावे सोदर इति 'यत्र भ्राता सहोदरः' इति वाक्यं (न ? च) सिद्धम् ॥

इति शरणदेवविरचितदुर्घटवृत्तौ
चतुर्थाध्याये चतुर्थः पादः ।

---

## अथ पञ्चमाध्याये प्रथमः पादः ।

### प्राक् क्रीताच्छः । १ ।

### आत्मन्विश्वजनभोगोत्तरपदात् खः । ९ ।

कथं 'पञ्चजनीयो' 'विश्वजनीयः', आभ्यां खप्रसङ्गात् । उच्यते । विश्वजनादेः 'कर्मधारयादेवेदमि'ति वचनात् षष्ठीसमासादौ 'प्राक्क्रीताच्छः' । कथं 'सार्वजनीन' इति । 'सर्वजनाट्ठञ्चे'ति वार्त्तिकेन ठञि पक्षे सार्वजनिकसर्वजनीनाभ्यां भाव्यम् । 'प्रतिजनादिभ्यः खञ्' (४-४-९९) इति खञ् । असाधुर्वा । 'विना(श)कालीनादयः' 'खः सर्वधुरात्' (४-४-७८) इत्यत्र योगविभा*गात् ॥

### तेन तुल्यं क्रिया चेद्वतिः । ११५ ।

कथं 'पुत्रं मित्रवदाचरेदि'ति, क्रियातौल्याभावात् । उच्यते । मित्रकर्मकाचरणक्रियया तुल्यं यथा स्यात् तथा पुत्रमाचरेदित्यर्थात् क्रियातौल्याद्वतिः । कथं 'पितृवत् स्थूलः पुत्र' इति 'स्थानिवत्' (१-१-५६) सूत्रे न्यासः । अत्र तुक्तं क्रियाग्रहणं गुणतौल्ये मा भूदिति । स्थूलशब्दोऽयं धर्मप्राधान्यात् स्थौल्यवृत्तिः । एवं च 'तत्र तस्येव' (५-१-११६) इति वतिः । पुत्र इति सप्तम्यन्तं पितरि यत् स्थौल्यं तत् पुत्र इत्यर्थः । यद्वा स्थूल इति विशेषणेन हेतुनिर्देशः । स्थौल्याद्धेतोर्गमनादिना पित्रा तुल्य इत्यर्थः । एवं चानेन वतिः ॥

### तस्य भावस्त्वतलौ । ११९ ।

कथं 'स्त्रीत्वं' 'पुंस्त्वं', 'स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात्'(४-१-८७)इत्यस्य भावात् । उच्यते । 'आ च त्वात्' (५-१-१२०) इति चकारात् त्वतलौ । 'यस्याः

* 'भागेन' ख.पाठ..

समस्तसुरतासमुदीरणेन'[1] चण्डी, भावस्य समुदीरणायोगात् समूहे तु तलोऽभावात् । उच्यते । धर्मधर्मिणोरभेदोपचारात् धर्मी ग्राह्यः । कथम् 'अस्तित्वं' 'ममत्वमि'ति, प्रातिपदिकाधिकारात् । उच्यते । विभक्तिप्रतिरूपकनिपातत्वात् । कथं 'नानात्वम्, अन्यथात्वयौगपद्यपौनःपुन्यादय' इति, असत्त्ववाचित्वात् षष्ठीसम्बन्धाभावात् । नानादयोऽत्र नानाभूतादिवचना ग्राह्याः । एवं च 'प्रेम स्नेहोऽथ दोहदमि'ति प्रियस्य भाव इतीमनिचि 'प्रियस्थिर' (६-४-१५७) इति प्रादेशे प्रेमा इति भाव्यम् । उच्यते । प्रीधातोर्मनिन् 'सर्वधातुभ्य' इत्यनेन । पृथ्वादिभ्य इमनिजन्तसम्भवात् पुंसि । तथा च इमनिजभावे 'थ्यन्कम्' इत्याद्यमरलिङ्गकारिका । कथं 'पौर्णमासी तु पूर्णिमा' इति, द्रव्यवचनत्वात् । उच्यते । पृधातोर्भावे क्तः । ततो 'भाववचनादिमच् वक्तव्य' इति 'त्रेर्मव् नित्यम्' (४-४-२०) इत्यत्र वार्तिकेनेमप् ॥

## गुणवचनब्राह्मणादिभ्यः कर्मणि च । १२४ ।

कथं 'वैरमि'ति । वीरस्य भावः कर्म वेति ष्यञा भाव्यम् । उच्यते । 'द्वन्द्वाद् वुन् वैरमैथुनिकयोः' (४-३-१२५) इति निर्देशात् । कथं 'सहजचापलदोषसमुद्धतः' इति माघः, अत्र चपलशब्दपाठात् ष्यञभावात् । तथा च माघः— 'चापल्यादथ पयसस्तरङ्गहस्तैरि'ति । उच्यते । शिवादित्वादण् ॥

## सख्युर्यः । १२६ ।

कथं 'तनो नियुक्तो दौत्येने'ति चण्डी । तथा 'वाणिज्यं चेति वृत्तयः' इत्यमरः । 'स्यात् सन्देशहरो दूतो दूत्यं तद्भावकर्मणो'रिति । ब्राह्मणादौ पाठात् ष्यञभावात् । तथा च (माघः?) 'ष्यञप्यत्र तेन दौत्यमि'ति भाषावृत्तिः ॥

## इगन्ताच्च लघुपूर्वात् । १३१ ।

कथं 'कवेः कर्म काव्यम्' । अणा कावमिति हि स्यात् । उच्यते । ब्राह्मणादित्वात् ष्यञ् । अथवा 'कव् वर्णे' इत्यस्माद् 'ऋहलोर्ण्यत्' (३-१-१२४) । 'कु शब्दे' मनोहरत्वादवश्यं कूयत इति 'ओरावश्यके' (३-१-१२५) इति ण्यद्वा ॥

## योपधाद् गुरूपोत्तमाद्वुञ् । १३२ ।

---

१. 'यच्चकमितुससनन्त यदनान्तमकर्तरि' इति. २. 'दूतवणिग्भ्यां च' इति वार्तिकमनुसन्धाय प्रश्नः कथमिति.

कथं 'साहाय्य', वुञो भावात् । तथा च माघः—'साहायकव्यग्रभुजं प्रसह्य' इति । उच्यते । जयादित्यमतेन साहाय्यमित्यपि न भवति नेति भागवृत्तिः ॥

## द्वन्द्वमनोज्ञादिभ्यश्च । १३३ ।

कथं 'गुरुलाघवम्' । उच्यते । पर्यायशब्दानां गुरुलाघवचिन्ता नास्तीति भाष्यकारवचनप्रामाण्यात् पूर्वविप्रतिषेधेन 'इगन्ताच' (५-१-१३१) इत्यण् । उत्तरपदस्य लेत्यस्य (विधि? वृद्धे) स्तत्र स्वीकारात् सिद्धिः । गुरुशब्देन धर्मवचनेनैव लाघवशब्दस्य वा द्वन्द्व. ॥

इति शरणदेवविरचितदुर्घटवृत्तौ

पञ्चमाध्याये प्रथमः पादः ।

---

अथ द्वितीय ःपादः ।

## धान्यानां भवने क्षेत्रे खञ् । १ ।

## प्राणिस्थादातो लजन्यतरस्याम् । ९६ ।

कथं 'शि*खी', प्राण्यङ्गत्वाद् । उच्यते । व्रीह्यादित्वादिनिः ॥

## सिध्मादिभ्यश्च । ९७ ।

कथं 'कुष्ठी'सिध्मादिषूपतापाच्च इति पाठात् । उच्यते । दीर्घान्तादेव ल-प्रत्यय इष्यते । ह्रस्वान्तात्तु 'द्वन्द्वोपतापगर्ह्यात् प्राणिस्थादिनिः' (५-२-१२८) ॥

## रजःकृष्यासुतिपरिषदो वलच् । ११२ ।

परिपूर्वात् सदेः 'सत्सूद्विष' (३-२-६१) इति क्विपि 'सदिरप्रतेः' (८-३-६६) इति षत्वे परिषच्छब्दाद्वलच् । तथा च घोषः—'या सम्प्रति परिषद्वलाना-मि'ति । एवञ्च कथं 'परिषद्वलान् महाब्राह्मैरि'ति भट्टिः । नवाक्षरत्वेन छन्दोभ-

१. 'प्राण्यङ्गादिति वक्तव्यम्' इति हि वार्तिकम्.

*. 'खी शी' ख.पाठः.

ज्ञात् । नवाक्षरेणैकपादे वृत्तभेदोऽस्ति यथा 'प्रधाने कर्मण्यभिहिते लादीनाहुर्द्विकर्मणामि'ति । तथा 'तस्मै तिलोदकं दद्यादपुत्राय भीष्मवर्मणे' । एवञ्च न च्छन्दोभङ्ग इति भागवृत्तिः । पृषोदरादित्वादिकारलोपे एकदेशविकृतस्यानन्यत्वात् पर्षच्छब्दाद्वलजिति भाषावृत्तिः । यद्वा 'पृषु स्नेहने' इत्यतः 'शृदृभसोऽदिः' इति बाहुलकाददिप्रत्यये । पर्षच्छब्दमत्र केचिदाचार्येण ग्राहिताः, केचित् पूर्वं व्युत्पन्नम् । उभयमेतत् प्रमाणमुभयथाप्याचार्येण शिष्याणां प्रतिपादितत्वादिति यथोक्त(सिद्ध)ये 'युवा खलति' (२-१-६७) इत्यत्र न्यासकृत् । कथं 'रजोयुक्ता भूरि'त्यत्र (न) वलच् । उच्यते । इतिकरणानुवृत्तेः ॥

## ज्योत्स्नातमिस्राशृङ्गिणोर्जस्विन्नूर्जस्वलगोमिन्मलिनमलीमसाः । ११४ ।

कथं 'ज्योतिष्मती', इह संज्ञायां ज्योत्स्नानिपातनात् । उच्यते । अन्यतरस्यांग्रहणानुवृत्तेर्मतुप् च ॥

## अत इनिठनौ । ११५ ।

कथं हलन्ताद् । व्रीह्यादित्वात् । कथं जातौ 'सर्पिणी' । 'एकाक्षरात् कृतो जातेस्सप्तम्यां च न तौ स्मृताविति' वचनात् । उच्यते । सर्पणं सर्पः । तद्योगादिनिः । ईनौ तु 'जातेरस्त्रीविषयाद्' (४-१-६३) इति ङीपि सर्पिणीत्येव । 'एकाक्षरात् कृतो जातेरि'त्यादि वाक्यं प्रयोगादितिकरणानुवृत्तिसाध्यम् । अतः प्रयोगदर्शनात् क्वचित् तौ भवतः 'पठिपठी' । पठिशब्दोऽपि हि पठनं पठः, भावे घञ् । संज्ञापूर्वकत्वाद् वृद्ध्यभावः । अत इनिः । 'नित्यवीप्सयोः' (८-१-४) इति द्विर्भावः पठिपठी । यद्वा 'बहुलमाभीक्ष्ण्ये' (३-२-८१) णिनिः । वृद्ध्यभावः पूर्ववदेव । 'आभीक्ष्ण्ये द्वे भवतः' इति द्वित्वम् । (इमा च । लक्ष्मीवान् । इन्दु लक्ष्मीश्चला सामासर्जविलजिति भागुरिः[1]) एव पठी अभ्यासशीलः । (उज्ज्वल)स्तूणादिवृत्तौ 'इक् कृष्यादिभ्य' इति इक् । पठिर्भावोहक इत्याह । कथं 'श्रावी प्रत्ययः' । प्रमाणे द्वयसज् (५-२-३७) इत्यत्रोक्तम् । उच्यते । अपो विषये घञ्बहुलवचनादिति । एवं च श्रवणं श्राव इति घञन्तात् पूर्ववदिनिः । यद्वा श्रावयतीति श्रावी । आवश्यके णिनिः । शब्दश्चोच्चार्यमाण आत्मसंश्राव इति । कथं 'गुर्विणी' । उच्यते ।

---

१. इनिरय कृत स्यात्.

गुरुत्वमिन्वतीति । 'इव व्याप्तावि'त्यतः क्विपि वलिलोपे 'ऋन्नेभ्यो ङीपि' (४-१-५) । गुरुरुदरे अस्या अस्तीति व्रीह्यादीनिर्वा ॥

## व्रीह्यादिभ्यश्च । ११६ ।

कथं 'मालिकः' । व्रीह्यादौ 'शिखादिभ्य इनिरेवे'ति वचनादिनिमत्तुपावेव । माली मालावानित्येव भवति । उच्यते । माला पण्यमस्येति 'तदस्य पण्यम्' (४-४-५१) इति ठक् ॥

## तुन्दादिभ्य इलच्च । ११७ ।

कथं 'जिह्वाले जुहवाम्बभूविम रुषा राजन्यसत्तामपि' इति मुरारिः । तुन्दादित्वादिलचि जिह्विल इति भाव्यम् । उच्यते । 'स्वाङ्गाद् वृद्धौ च' इति गणसूत्राद्वर्धिता जिह्वास्य जिह्विलः । वाचालस्तु जिह्वालः । 'प्राणिस्थादात' (५-२-९६) इति लच् ॥

## एकगोपूर्वाट्ठञ् नित्यम् । ११८ ।

कथम् 'एकदेशी अवयवी'ति वृत्तिः । उच्यते । पूर्वनिपातव्यभिचारादस्यानित्यत्वादिनिः । ननु कर्मधारयान्मत्वर्थीयाद् बहुव्रीहिरिष्टो लघुत्वादिति कातीयन्यायात्नेनिः । यत्र बहुव्रीहिमत्वर्थीययोरेकार्थता तत्रायं न्यायः । इह तु एको देशोऽस्येति बहुव्रीहिणा अवयव एव प्रतीयते, नावयवी । यथा लोहितशालिमान् ग्राम इत्यादौ नाय न्याय इत्यपरसूत्रे न्यासः । यद्येवं कथम् 'अइउण्' इत्यत्र 'अ इ उ इत्यादिको विशिष्टानुबन्धवच्छब्द' इति न्यासः । तथा 'हेतुमति च' (३-१-२६) इत्यत्र 'भिक्षा हि प्रचुरतरव्यञ्जनवत्य' इति । तथा विशेषणसूत्रे 'अनेकप्रकारवदस्त्वि'ति । मन्सूत्रे च 'इकारानुबन्धवत्प्रातिपदिकामि'ति । तथा 'बिसकिसलयच्छेदपाथेयवन्त' इति मेघः । 'फलवत्पूगमालिने'ति रघुः । 'त्वगुत्तरासङ्गवतीमि'ति कुमारः । बहुव्रीहिमत्वर्थयोः समानार्थत्वात् । उच्यते । एकीयमते तत् । ये तु लाघवार्थं नानुमन्यन्ते, तन्मते नैते प्रयोगाः । रक्षितस्तु 'बहुव्रीहेरेकदेशशब्दादिनिः । 'अइउणि'त्यत्र नास्ति । स हि इतिकरणानुवृत्तेः कर्मधारयादेवेष्यत' इत्याह ॥

## अस्मायामेधास्रजो विनिः । १२१

कथं 'सरस्वान् अर्णवः' । 'सरस्वती पयस्वानि'ति भाष्योदाहरणाद् 'एकगोपूर्वाद्' (५-२-११८) इत्यतः परेण मतुप् समुच्चीयत इति भा(ष्य? ग)वृत्तिः । कथं 'भवन्ति मायाविषु य न मायिन' इति भारविः । तथा 'जातवेदोमुखान्—मायी' इति कुमारः । व्रीह्यादिपाठादिनिरपि । 'फलबर्हाभ्यामिनच्' । कथं 'फलवान् फलिनः फली'त्यमरः । अनेन नित्यमिनचा भाव्यम् । बहुलग्रहणानुवृत्तेः ॥

## द्वन्द्वोपतापगर्ह्यात्प्राणिस्थादिनिः । १२८ ।

कथम् 'इयं चर्मवती कन्ये'ति, अनेन नित्यमिनिप्राप्तेः । इन् ठन्नादेर्बाधकः । उच्यते । चकारान्मतुप् समुच्चीयते इत्येके ॥

इति शरणदेवविरचितदुर्घटवृत्तौ
पञ्चमाध्याये द्वितीयः पादः ।

---

अथ तृतीयः पादः ।

## प्राग्दिशो विभक्तिः । १ ।

## सर्वैकान्यकिंयत्तदः काले दा । १५ ।

कथं 'तत्र देव सर्वत' इत्यत्र न दाप्रत्ययः । अन्तरङ्गत्वात् कालसामान्ये तस्येष्यमाणत्वात् । 'कालविभागे चानहोरात्राणाम्' (३-३-१३७) इत्यत्र रक्षितः ॥

## इदमस्थमुः । २४ ।

कथम् 'इमं प्रकारमापन्न इत्थम्भूत'(लक्षण ?) इति । प्रकारश्च सादृश्यम् । तत्र तृतीया युक्ता । इत्थम्भूतलक्षण(२-३-२१) निर्देशाद् द्वितीयान्तादपि थमुः ॥

## दक्षिणादाच् । ३६ ।

कथं 'दक्षिणापथः' । उच्यते । आबन्तस्यैव पथिशब्देन समासात् । एवं 'यशस्यं दक्षिणामुखं' । एवमुत्तरापथम् उत्तरामुखमिति ॥

## अस्ताति च । ४० ।

कथं 'पश्यामि तां तत इतः पुरतश्च पश्चाद्' इति भवभूतिः । 'पुरः पुर-

तोऽग्रत' इत्यमरः । तथा 'पुरतः प्रथमे चाग्र' इति विश्वप्रकाशः । चिन्त्यमिति भाषावृत्तिः । यद्वा पुरस्तिष्ठतीति प्रातिपदिकाद्धात्वर्थे णिचि टिलोपे च पचाद्यचि आद्यादित्वात् तसिः । पुरोवर्तिनीमित्यर्थः ॥

## याप्ये पाशप् । ४७ ।

कथं 'रक्षःपाशानि'ति भट्टिः, क्रियागुणयोर्निन्दायोगात् । उच्यते । अत्रापि राक्षसक्रिया निन्द्यते ॥

## द्विवचनविभज्योपपदे तरबीयसुनौ । ५७ ।

कथं 'गोतरः', क्रियागुणाभावात् । तौ हि प्रकृष्येते । उच्यते । गोत्वगुणप्रकर्षे तरबत्र ॥

## प्रकारवचने जातीयर् । ६९ ।

कथम् 'एकजातीया', 'सङ्ख्याया विधार्थे धा' (५-३-४२) इति धाप्रत्ययेन बाधितत्वात् । उच्यते । गुणद्रव्यप्रकारे जातीयर्, क्रियाप्रकारे तु धाप्रत्यय इष्यते ॥

## वा बहूनां जातिपरिप्रश्ने डतमच् । ९३ ।

कथं 'कतमो भवतां देवदत्तः', जातेरिह प्रश्नाभावात् । उच्यते । 'कतरकतमौ जातिपरिप्रश्ने' (२-१-६३) इति जातिग्रहणाद् अन्यत्रापि भवति ॥

इति शरणदेवविरचितदुर्घटवृत्तौ

पञ्चमाध्याये तृतीयः पादः ।

---

अथ चतुर्थः पादः ।

## पादशतस्य सङ्ख्यादेर्वीप्सायां वुन् लोपश्च । १ ।

## अपडक्षाशितङ्ग्वलंकर्मालंपुरुषाध्युत्तरपदात् खः । ७ ।

कथम् 'अस्मास्वधीनं किमु निस्पृहाणामि'ति भारविः, केवलादधिशब्दात् खप्रत्ययाभावात् । उच्यते । इनमधिगतोऽधीन इत्यायत्तपर्यायोऽस्ति, यस्यायं प्रयोगो वार्त्तिके 'वाक्य वक्त्रधीनमि'ति भाषावृत्तिः । तथा 'चाधीनो निघ्न आयत्त

इत्यमरः । यद्वा 'धीङ् अनादर' इति दैवादिकात् निन्दायां नञ्समासे आदरार्थ एव । अथवा अस्मास्वधीति 'सप्तमी शौण्डैः' (२-१-४०) इति समासे बहुलवचनादलुकि खप्रत्ययः ॥

## किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे । ११ ।

कथम् 'उच्चैस्तरां वक्ष्यति शैलराज' इति कुमारः, शिरोविशेषणत्वेन द्रव्यप्रकर्षात् । उच्यते । वक्ष्यतीति क्रियाविशेषणत्वात् ॥

## यावादिभ्यः कन् । २९ ।

कथं 'सा कन्दुकैः कृत्रिमपुत्रकैश्चे'ति कुमारः । 'पुत्रात् कृत्रिम' इति गणसूत्रात् कनैव कृत्रिमार्थो लब्धः । कृत्रिमग्रहणानर्थक्यात् । अनुकम्पाद्यर्थकना । अनुकम्पाद्यर्थेऽपि पुत्रशब्दोऽस्ति । तद्व्यावृत्तये कृत्रिमग्रहणम् ॥

## अपादाने चाहीयरुहोः । ४५ ।

कथं 'मा दर्शतान्य भरतं च मत्त' इति भट्टिः, 'के न संविद्रते नान्यस्त्वत्तो बान्धववत्सलः' इति, 'अन्याराद्' (२-३-२९) इत्युपपदपञ्चमीत्वात् । उच्यते । तसिरिति योगविभागात् । 'आद्यादिभ्य उपसङ्ख्यानमि'ति वा ॥

## सङ्ख्यायाश्च गुणान्तायाः । ५९ ।

कथं 'सीतामूचे सुखा भव' इति भट्टिः । अपपाठ एवायम् । सुखाकुर्वीति पाठ आद्यः ॥

## अच् प्रत्यन्ववपूर्वात् सामलोम्नः । ७५ ।

कथं 'नीचः' । उच्यते । न्यञ्चतीति न्यक् न्यगेव नीचः । पद्मनाभाद्यर्थवदजिति योगविभागादच् ॥

## ब्रह्महस्तिभ्यां वर्चसः । ७८ ।

कथम् 'अस्माकमपि ब्रह्मवर्चसो न बिभेषी'ति मुरारिः । समासान्तविधेरनित्यत्वात् ॥

## तत्पुरुषस्याङ्गुलेः सङ्ख्याव्ययादेः । ८६ ।

---

१ 'आदान' इति 'आधारे' इति च पाठौ धातुवृत्त्यादिषु

२. मल्लिनाथस्तु 'उच्चैस्तरम्' इति पाठमास्थाय द्रव्यप्रकर्षादामभावो न्याय्य इत्याह।

३ 'ब्रह्मवर्चसाद्' इति त्वाधुनिकोऽनर्घराघवे पाठो दृश्यते

कथं 'गामेकां स्वर्णमेकं वा भूमेरप्यर्धमङ्गुलमि'ति। तथा च 'उच्छ्रसिता भूमिः साङ्गुलान्येकविंशति'रिति केवलादङ्गुलिशब्दादचोऽभावात्। उच्यते। अङ्गुलिरस्य परिच्छेदिका विद्यत इति अर्शआदित्वादच्। एवं चाङ्गुलिपरिच्छिन्नो भागोऽङ्गुलः॥

## राजाहस्सखिभ्यष्टच्। ९१।

कथं 'वायुसख्या'। उच्यते। बहुव्रीहिणा। कथम् 'आगामिवर्तमानाहर्युक्तायां निशि पक्षिणी', विशेषणसमासात् टचा भाव्यम्। उच्यते। आगामिवर्तमाने अहनी यस्याष्टप्रहरस्येति बहुव्रीहिः। समासान्तविधेरनित्यत्वाद्वा। 'रोऽसुपि' (८-२-६९) इति रेफादेशाद् 'हशि च' (६-१-११४) इत्युत्वं न॥

## उपसर्गाच्च। ११९।

'यद्यहं नाथ! नायास्यं विनसा हतबान्धवा'। इति भट्टिः। यावता 'वेर्ग्रो वक्तव्य' इत्यनेनाचि नासिकाया ग्रादेशे कृते विग्र इति स्यात्। तथा चामरः—'विग्रो विगतनासिकः'। नसाशब्दस्याय प्रयोगः। तथा च कोशान्तरं—'नसा नासापि नासिका'। 'नस कौटिल्य' इत्यस्य पचाद्यजन्तीति धातुप्रदीप*टीका। कथम् 'अ(प)नासिको बालः'। 'अनुनासिको वर्णः'। 'मुखनासिकावचनोऽनुनासिक' (१-१-८) इति निर्देशादस्यानित्यत्वात्॥

## धनुषश्च। १३२।

कथं 'स्वलावण्याशंसाधृतधनुषमह्नाय तृणवदि'ति महिम्नस्तोत्रम्। समासान्तविधेरनित्यत्वाद् 'वा संज्ञायाम्' (५-४-१३३) इत्यनुवृत्तेर्व्यवस्थितविभाषाविज्ञानाद्वा सिंहावलोकनन्यायेन॥

## गन्धस्येदुत्पूतिसुसुरभिभ्यः। १३५।

कथं 'क्रान्तकान्तवदनप्रतिबिम्बे भग्नबालसहकारसुगन्धावि'ति माघः। 'तदेकान्तग्रहणं कर्तव्यमि'ति वचनाद् गन्धस्यावयवत्वे स्वाभाविकत्वे इत्प्रत्ययविधानात्। 'भग्नबालसहकारसुगन्ध' इत्याद्यः पाठः, सुगन्धाविति प्रमादपाठ एव। लक्ष्यपरतन्त्रत्वात् प्रायिकं वार्तिकमित्यन्यः। तथा च 'एवे चानियोगे' इत्यस्य प्रायिकत्वं रक्षितेनोक्तम्। 'महीध्रः पुण्यसुगन्धिरादृतः' इति भारवीयव्याख्यायामुक्तं

* 'दिश' क पाठः.

प्रागवस्थातोऽन्यदीयगन्धस्य सम्पादनाद् गन्धः प्रारम्भक एवेति भवत्येकान्तग्रहणं गन्धविशेषणम्। (स्ताता?) किन्त्वेवम् 'आघ्रायिवान् गन्धवहः सुगन्धस्तेनारविन्दव्यतिपङ्कवांश्चे'ति भट्टिव्याख्याने जयमङ्गलायां यदुक्तम् 'गन्धस्येदु' इत्यादिना इकारो न भवति, तत्र तदेकान्तग्रहणादिति, तद्व्याहतं स्यात् ॥

## वयसि दन्तस्य दतृ। १४१।

'सा दक्षरोषात् सुदती ससर्जे'ति कुमारः। तथा 'सुदतीं सुनन्दे'ति रघुः। न चात्र वयो गम्यते। भगवती गौरी इन्दुमती च तत्र बालापदेन विशेषिता। 'बालेति नियता नारी यावत् षोडशवत्सरमि'ति. तथा 'बालोनषोडशे'ति स्मृतेश्च पञ्चदशवर्षीया गण्यते। एवं चात्रापि यौवनं गम्यत एव ॥

## नद्यृतश्च। १५३।

कथं 'वरतनु! सम्प्रवदन्ति कुक्कुटा' इति। नदीसंज्ञकस्तनूशब्दोऽयम्। 'अम्बार्थनद्योर्ह्रस्वः' (७-३-१०७) इति ह्रस्वविधानात्। एवञ्च नित्यं कप् स्यात्। उच्यते। समासान्तविधेरनित्यत्वादिति वाच्यम्। एवं च 'सुतनु! सत्यमलङ्करणाये'ति। तथा 'ननु सुतनूमनुपालयानुयान्तीमि'ति माघः ॥

इति शरणदेवविरचितदुर्घटवृत्तौ
पञ्चमाध्याये चतुर्थः पादः।

---

अथ षष्ठाध्याये प्रथमः पादः।

## एकाचो द्वे प्रथमस्य। १।

### श्लौ। १०।

कथम् 'आदध्यादन्धकारे रतिमतिशयिनीमि'ति मयूरः, आशीर्लिङि श्लोरभावात्। 'दध धारण' इत्यात्मनेपदानित्यत्वादित्युक्तं प्राक्। आधेयादिति वा पाठः कर्तव्यः ॥

## वचिस्वपियजादीनां किति। १५।

कथं 'ववाह रक्तं पुरुषा' इति। उच्यते। भूवादेराकृतिगणत्वात् तत्र वहिः

प्रकृत्यन्तरमस्ति। 'बाहृ प्रयत्ने' इत्यस्मादात्मनेपदानित्यत्वाद्वा। कथं 'यष्टिः'। यजेः क्तिनि क्तिचि वा न सम्प्रसारणम्। उच्यते। 'शक्तियष्ट्योरीकक्' (४-४-५९) इति निर्देशात्। कथं 'वाच्यती'ति 'किब्वचि'[1] इत्यादिना क्विप्सन्नियोगेनासम्प्रसारणाद्वच्येकदेशविकृतत्वात् सम्प्रसारणप्रसङ्गात्। साहचर्यादविकृतवचिग्रहणाद्, व्यक्तौ शब्दान्तरत्वाद्वा। कथं 'कर्णवेधः' 'व्यधो वेधे' इत्यमरः। उच्यते। 'विध विधाने' घञ्। (धातो)रनेकार्थत्वात्॥

## शृतं पाके। २७।

कथं 'शृतं धान्यपटोलयोरि'ति। क्षीरहविषोर्नित्यं व्यवस्थितविभाषात्वात् क्वचिदन्यत्रापि भवति। पक्कमिति वा पाठः। 'पाके क्षीराज्यपयसामि'ति चान्द्राः॥

## आदेच उपदेशेऽशिति। ४५।

कथं '(रुक्तक?)मरतकाह्वय' इति। आहूयतेऽनेनेति पुंसि संज्ञायां घे आत्वभावात्। गा का शब्द इति दिवादौ पठितव्ये कै गै शब्द इति भ्वादौ पाठाद् ज्ञापकाद् आत्वमनित्यमिति ज्ञापकसमुच्चयः। पृषोदरादिपाठाद्वा आत्वाभाव इति केचित्॥

## पद्दन्नोमास्हृन्निशसन्यूषन्दोषन्यकञ्छकन्नुदन्नासञ्छस्प्रभृतिषु। ६३।

कथं 'माघे मासि रटन्त्याप' इति, छन्दसीत्यनुवृत्तेः। उच्यते। भाषायामपीष्यत इति वृत्तिः। एवञ्च 'पद्भा भरद्वाजमुनिं सशिष्यमि'ति भट्टिः। 'व्यायामक्षुण्णगात्रस्य पद्म्यामुद्वर्तितस्य चे'ति। पच्छब्दोऽय पादपर्याय इति रक्षितः॥

## लोपो व्योर्वलि। ६६।

कथम् 'अन्लश्च रसाः' इत्यमरः। 'रवि लवि अवि शब्दे'[2] इत्यतः 'भूशक्यविभ्यः क्रः' इति क्रप्रत्यये वलोपात्। उच्यते। यकारसाहचर्यात् न (य!प) रलवि(प)ये लोपः। अस्य पवर्गान्तगणे (वा) पाठः। कथं तर्हि 'वृश्चिक' इति। उच्यते। 'प्रश्नो व्रीहिर्व्रण इत्यादौ तु प्रतिषेधादि'ति[3] भाषावृत्तिः। ('असिद्धं बहिरङ्गमन्तरङ्गे' शपोऽसिद्धत्वे वलोपाद्वा शपोऽसिद्धत्वेन वकारस्यैवाभावात्?)॥

---

१. 'क्विब्वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घोऽसम्प्रसारणं च' इति वचनम्. २. पाठश्च 'रवि लवि अवि शब्दे' इति. ३. प्रतिषेधश्च भाष्योक्तः वलोपप्रत्याख्यानं स्यात्.

## हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल् । ६८ ।

कथम् 'अर्धपिप्पली', प्रत्ययग्रहणपरिभाषया ङ्याबन्तादेव सुपो भावात् । तत्र दीर्घग्रहणान्नात्र तदादितदन्तनियमः । तद्धि निष्कौशाम्बिरित्याद्यर्थमिति रक्षितः ॥

## आद् गुणः । ८७ ।

कथं 'दग्धां गुहां पश्य उलूकपूर्णामि'ति । 'संहितायाम्' इत्यनुवृत्तेर्नासंहितायाम् । कथम् 'आउदकान्तं पद्मं प्रियमनुव्रजेदि'ति, 'संहितैकपदे नित्ये'ति वचनात् । उच्यते 'ऊदनोर्देशे' (६-३-९८) इति दीर्घोच्चारणग्रहणादवग्रहार्थकादेकपदेऽपि संहिता अनित्येति । 'शक्तियष्ट्योरीकक्' (४-४-५९) इति दीर्घोच्चारणाच्च । तथा च 'उपसर्गाद्ध्रस्व ऊहतेः' (७-४-२३) इत्यत्र रक्षितेनोक्तं — 'संहितैकपदे नित्येत्यादि प्रायिकमिदम्' । ओदकान्तमिति वा पाठः ॥

## वृद्धिरेचि । ८८ ।

कथं 'शुद्धोदन' इति । शकन्ध्वादित्वाद् ओत्वम् । 'द्रष्टुमुत्सुकमिति(?) पुत्र! एतौ' । उच्यते । असंहितायां भविष्यति ॥

## औतोऽम्शसोः । ९३ ।

कथं 'चित्रगुं', स्थानिवत्त्वादात्त्वप्रसङ्गात् । अनल्विधाविति निषेधान्न स्थानिवत्त्वम् ॥

## अकः सवर्णे दीर्घः । १०१ ।

कथं 'नैष अ(ध्य?ध)यनस्य समय' इति । 'कर्मणा यमभिप्रैति' (१-४-३२) इत्यत्र च 'अभिप्रयणमभिप्राय' इति न्यासः । उच्यते । 'गतिकारकोपपदानाम्' इति सुपः प्राक् समासे । पर(पूर्व?रूप)त्वे वा । कथं 'तपोवनं प्राध्ययनाभिभूतं समुच्चरच्चारुपतत्रिशिञ्जामि'ति भट्टिः । 'तत्पुरुषे कृति बहुलम्' (६-३-१४) इति ज्ञापकात् प्रायिक 'गतिकारकोपपदानाम्' इति रक्षितः । कथम् 'अधीयते' । दीर्घे कृते इयङा भाव्यम् । अधियत इति स्यात् । 'नेन्द्रस्य परस्य' (७-३-२२) इति ज्ञापकात् पूर्वोत्तरयोस्तावत् कार्यं, पश्चादेकादेश

---

1. समास इति गत्यादीनामप्यसुबन्तानामेव समास इति पक्षे समाश्रिते सतीति भावः । तदा हि गतेर्धातुना पूर्वं योगात् तदुभयाश्रितस्य कार्यस्य प्राक्प्रवृत्तिः । गत्यादीनां सुबन्तानामेव समास इति पक्षे तु 'अभिप्रयणादेः शकन्ध्वादित्वात् समासस्तेन साधुत्वम्' इति सीरदेवः

इति । 'वार्णादाङ्गं बलीय' इति वा इयङि दीर्घत्वम् । 'सार्वधातुकमपिद्' (१-२-४) इत्यत्र च्व्यन्तप्रस्तावे न्यासकृता व्याश्रयेऽपीय स्वीकृता । 'विप्रतिषेध' (१-४-२) इत्यत्र मैत्रेयेणाप्युक्तं— 'लक्ष्यवशात् कचिद्व्याश्रयेऽप्येषा प्रवर्तते अभिप्रयणादावि'ति । कथं (धन्वन्तरिसस्तनमर्थसनमिति ?) उच्यते । शकन्ध्वादिः । कथं 'परोक्षम्' । अक्ष्णः परं परार्क्षमिति प्राप्नोति 'अव्ययीभावे शरत्प्रभृतिभ्य'(५-४-१०७)ष्टच् । 'परोक्षे लिड्' (३-२-११५) इति निर्देशात् । शरत्प्रभृतौ न्यासः ॥

## प्रथमयोः पूर्वसवर्णः । १०२ ।

कथं 'देवो याती'ति, उत्वे कृते अनेन दीर्घात् । उच्यते । 'नादिचि' (६-१-१०४) इति निषेधः ॥

## सम्प्रसारणाच्च । १०८ ।

कथं 'विव्ययुर्देहानि'ति भट्टिः । 'न व्यो लिटि' (६-१-४६) इत्यात्वनिषेधेऽप्यनेन पूर्वरूपत्वात् । अत एव 'संविव्युरम्बरविकासि चमूसमुत्थमि'ति माघः । उच्यते । चिन्त्यम् । 'संज्ञापूर्वको विधिरनित्य' इति वा सम्प्रसारणाभावः ॥

## ऋत उत् । १११ ।

कथं 'जाग्रोऽविचिण्णल्ङित्सु' (७-३-८५) इति, अनेन जागुरिति स्यात् । यथा 'उपविद्जागु'रिति । अत एव निर्देशात् । नावश्यं लक्ष्ये लक्षणं प्रवर्तते लक्ष्यपरतन्त्रत्वाच्छास्त्रस्येति वा वाच्यम् ॥

## ख्यत्यात् परस्य । ११२ ।

कथम् 'एकः सख्यास्तव सह भये'ति मेघः । विकृतनिर्देशादनेन भाव्यम् । उच्यते । विकृतनिर्देशस्य क्यजन्ते कृतार्थत्वादिति । इह परत्वाद् 'आण्नद्या' (७-३-११२) इति आटा भाव्यम् ॥

## दिव उत् । १३१ ।

कथं 'दिवौकस' इति, उत्वे कृते पूर्वोत्तरपदयोर्यणि द्योकस इति स्यात् । उच्यते । शब्दपरविप्रतिषेधादुकारस्य यणि रूपमिति रक्षितः । 'अचः परस्मिन् पूर्वविधौ' (१-१-५७) इति स्थानिवत्त्वादिकारस्य न यण् । 'सकृद्गतौ विप्रतिषेधे'

इति न्यायात् । चान्द्रैः पृषोदरादित्वादुत्वाभाव इष्यते । तत्र एवान्ये दिवौकस इति । अकारान्तोऽपि दिवशब्दोऽस्ति,

'इदं पुरं तेन विसर्जितं वनं वनं च तत् तेन समन्वितं पुरम् ।
प्रशोभते तेन हि नो विना पुरं मरुत्वता वृत्रवधे यथा दिवम्' ॥

इत्यश्वघोषप्रयोगात् । 'दिवं नभ' इत्य(म ? प)रः । तेन वा दिवौकस इति । कनिन्प्रत्ययान्तेन दिवा ओको येषामिति भागवृत्तिः ॥

## एतत्तदोः सुलोपोऽकोरनञ्समासे हलि । १३२ ।

कथं 'सो वा कम्बलविक्रयी', अनेन सलोपात् । उच्यते । त्यच्छब्दस्य । 'स्यो वा कम्बलविक्रयी'ति पाठः कर्त्तव्यः । यद्यपि त्यच्छब्दश्छान्दस इति वृत्तिः, तथापि छान्दसा अपि कचिद् भाषायां प्रयुज्यन्त इति ॥

## सम्पर्युपेभ्यः करोतौ भूषणे । १३७ ।

कथम् 'अनित्यः सर्वसंस्कारः' । तथा 'सर्वं संस्कारमनित्यमि'ति कार्यपर्यायत्वात् । अव्युत्पन्नोऽयमिति भाषावृत्तिः । 'सुट् कात् पूर्वः' (६-१-१३५) इति विधिश्चाधिकारश्चेत्यन्यः ॥

इति शरणदेवविरचितदुर्घटवृत्तौ

षष्ठाध्याये प्रथमः पादः ।

---

(द्वितीयः पादो न व्याख्यातः)

'अथ तृतीयः पादः ।

## अलुगुत्तरपदे । १ ।

## ओजस्सहोम्भस्तमसस्तृतीयायाः । ३ ।

कथं 'सततनैशतमोवृतमि'ति भारविः, अनेन तृतीयाया अलुक्प्रसङ्गात् । उच्यते । इगुपधलक्षणे के कृते नैशतमो वृतं वर्तमानमस्येति रक्षितः । यद्वा ग्रहणवता प्रातिपदिकेन तदन्तविधेर्निषेधान्नैशशब्देन समासे अलुङ् नास्त्येव । यदि पूर्वपदभूतं यत्तमस्तत्राऽलुक्, न तु यत्र चोभयमिति भाषावृत्तिः ॥

## आनङ् ऋतो द्वन्द्वे । २५ ।

कथम् 'अध्येतृवेदित्रोरुत्पत्तस्ये'ति 'प्रोक्ताल्लुग्' (४-२-६४) इत्यत्र वृत्तिः । तथैव 'नेष्टोद्गातारावि'ति मीमांसकप्रयोगः । विद्यासम्बन्धस्याविवक्षितत्वान्नात्रानङ् । विवक्षापि शब्दव्युत्पत्तेः प्रधानं कारणमिति 'तदाद्याचिख्यासायाम्' इत्यत्र सत्प्रयोगेण ज्ञापितम् । होतृपोतृनेष्टोद्गातार इत्यत्र मध्यमपदे आनङ् नास्ति । समासे सर्वान्तं पदमुत्तरपदमिति पूर्वाचार्यप्रसिद्ध्याश्रयणात् । अत एव 'नैककीर्तिरि'ति त्रिपदबहुव्रीहौ समासे नलोपाभाव इति रक्षितः । कथं 'पुत्रौ दुहितारमजावि'ति त्रिकाण्डशेषः, ऋत इत्यनुवृत्तेः ऋदन्तद्वन्द्वस्य ग्रहणात् । उच्यते । असाधुरेवायम् । 'पुत्रेऽन्यतरस्याम्' (६-३-२२) इत्यतोऽनुवृत्तस्य पुत्रस्यार्थग्रहणादिति केचित् । तन्न । अतिप्रसङ्गादव्याख्यातत्वाच्च ॥

## देवताद्वन्द्वे च । २६ ।

कथं 'रविचन्द्रावपि लोपलक्षितावि'ति घटकर्परः । उच्यते । द्वन्द्वग्रहणेऽनुवर्तमाने पुनर्द्वन्द्वग्रहणं वेदप्रसिद्धद्वन्द्वग्रहणार्थम् । न च रविचन्द्रयोर्द्वन्द्वो वेदप्रसिद्ध इति रक्षितः ॥

## ईदग्नेः सोमवरुणयोः । २७ ।

कथमुत्तरकाण्डे 'एवं विनिश्चयं कृत्वा सम्प्रगृह्य कुशीलवौ' । तथा 'भविष्यदुत्तरं काव्यं यतन्तौ च कुशीलवौ' । अत्र कुशलवयोरनन्तर्भावादिति । उच्यते । दीर्घत्वेन सिद्धेरारद्विधानमन्यत्रापि यथा स्यादित्येवमर्थमिति, तेनेह कुशीलवौ सिद्धाविति भाषावृत्तिः । नन्वेवं 'कविः कुशलवावेव चकार किल नामत' इति रघुः न प्रकल्पते, 'राम इव कुशलवयो रूपोच्छ्राय' इति सम्बन्धश्च । 'विभाषा स्वसृपत्योः' (६-३-२४) इत्यतः विभाषाग्रहणानुवृत्तेर्व्यवस्थितविभाषात्वात् कश्चिन्नेति ॥

## स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु । ३४ ।

कथं 'दृढभक्तिरिथ *शूरश्चे'ति चाणक्ये, भक्तिशब्दस्य प्रियादिषु पाठान्निषेधात् । अर्थात्पूर्वपदस्य विवक्षितत्वादिति वृत्तिः । दृढ भक्तिरस्येति वाच्यं पदसंस्कारेण । एवम् (नभारिष्ट पृथिवीव्यक्तकालः ?) कथम् 'एकोऽहं भवतीसुत-

* 'भूशूर' (?) इति वा पाठः

क्षयकरो मातः! कियन्तोऽरयः' इति वेणी, 'भवतीप्रसादादि'ति चण्डी, सर्वनाम्नो वृत्तिमात्रे पुवंद् इति वचनात् । उच्यते । पुंवदिति योगविभागसाध्यमिदं क्वचि-देव । अत एव वृत्तौ न लिखितम् । 'एवे चानियोगे' इति च प्रायिकम् ॥

## तसिलादिष्वा कृत्वसुचः । ३५ ।

कथं 'सतीत्वं सखि! रक्षणीयमि'ति, त(त्रित्य? न्वीत्व)मिति च । उच्यते । 'न कोपधाया' (६-३-३७) इत्यत्र योगविभागात् प्रतिषेधः ॥

## पुंवत् कर्मधारयजातीयदेशीयेषु । ४२ ।

कथं 'गौरीब्राह्मणितरे'ति 'सुप्तिडन्तं पदम्' (१-४-१४) इत्यत्र वृत्तिः, गौरत्वं स्त्रीपुंसयोः प्रवृत्तिनिमित्तमिति समानायामाकृतौ भाषितपुंस्कत्वात् पुंवत्प्रस-ङ्गात् । उच्यते । यदा गौरीति पुंयोगनिमित्त. स्त्रीप्रत्ययः, तदिदमुक्तम् । अतो गौरब्राह्मणितरेति लक्ष्यत इति रक्षितः । 'महाष्टमी'त्यादौ पुंवत्त्वात्, अपूरणीप्रिया-दिष्वित्यस्मान्ननुवृत्तेः ॥

## आन्महतः समानाधिकरणजातीययोः । ४६ ।

कथं 'महतीप्रियः', लिङ्गविशिष्टपरिभाषया आद्भावात् । उच्यते । 'घ-टघटी'ग्रहणेनास्या अनित्यत्वात् ॥

## द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योः । ४७ ।

कथं 'सन्देहद्वापरौ चाथे'त्यमरः, परशब्दस्यासंख्यात्वात् । उच्यते । 'आन्महत' (६-३-४६) इत्यत्र आदिति योगविभागात् । अत एव 'प्रागेकादश स्मृता' इति । 'कुसीददशैकादशात्' (४-४-३१) इति निपातनाद्वा । 'सप्तविंश-तिमौक्तिकैरि'ति योगविभागादेव । 'अन्येषामपि दृश्यत' (६-३-१३७) इति दीर्घेण वा वृद्धसुवर्णे । एवं पूर्वामुखः पश्चिमामुखः । उत्तरापथः दक्षिणापथः । (पत्यदे-शा?) दक्षिणे पन्था अस्येति बहुव्रीहौ । यद्वा 'दक्षिणादाच्' (५-३-३६) 'उत्तराच्च' (५-३-३८) इति 'दिक्सङ्ख्ये' (२-१-५०) इति समासः ॥

## ङ्यापोः संज्ञाच्छन्दसोर्बहुलम् । ६३ ।

कथं 'वैदेहिबन्धोर्हृदयं विददे' इति रघुः, असंज्ञात्वात् । उच्यते । बहुल वचनादसंज्ञायामपि । अत एव 'प्रमदवनमन्तःपुरोचितमि'त्यमरः । अथवा प्रम-

दार्थे वनं प्रमदवनं। यदा तु प्रमदाया वनमिति समासस्तदा 'प्रविष्टः प्रमदावन- मि'ति भट्टिः॥

### त्वे च। ६४।

कथं 'जातेरेकत्वात्' 'परिभाषायाः स्वरूपविषयत्वादि'ति, 'संज्ञायामसम्भ- वाच्छन्दस्येवोदाहरणानी'ति वृत्तिव्याख्यानात्। सामान्योपक्रमेण स्त्रीत्वस्याविव- क्षितत्वात्। 'उपधात्वादि'ति तूपदधातीत्युपधः। 'आतश्चोपसर्गे' (३-१-१३६) इति कः। उपधायक उपध इत्येवं सिध्यति। 'अनुपधात्वादि'ति तु 'धिन्विकृ- ण्व्योर च' (३-१-८०) इति न्यासः प्रमाद एव॥

### अरुर्द्विषदजन्तस्य मुम्। ६७।

कथम् 'आढ्यंसुकरण' इति व्यवधाने मुम्। 'कृद्ग्रहणे गतिकारकपूर्व- स्यापि ग्रहणमि'ति वचनात्। कथं 'धुरन्धरः', मुमो लक्षणाभावात्। उच्यते। पृषोदरादित्वात्। कथं 'मध्यन्दिनार्कसन्तप्तः सरसीं गाहते गजः,' मुमो लक्षणा- भावात्। चन्द्रगोमी तु 'मध्यस्य दिन' इति सूत्रितवान्। उच्यते। पृषोदरा- दित्वात्॥

### नभ्राण्नपान्नवेदानासत्यानमुचिनकुलनखनपुंसक- नक्षत्रनक्रनाकेषु प्रकृत्या। ७५।

कथं 'नासत्यश्चैव दस्रश्च द्वावेतावश्विनीसुतौ' इति, तथा (च?) 'नास- त्यावश्विनौ दस्रावाश्विनेयौ च तावुभावि'त्यमर, नासत्या इति बहुवचनान्तनिपा- तनात्। उच्यते। बहुवचनमतन्त्रं प्रयोगवृत्तिपरत्वात्॥

### सहस्य सः संज्ञायाम्। ७८।

कथं 'भ्रमवालसहकारसुगन्धावि'ति। उच्यते। यत्र समासे सति संज्ञा गम्यते तत्र सभावः स्यान्नान्यत्र॥

### ज्योतिर्जनपदरात्रिनाभिनामगोत्ररूपस्थानवर्णवयो- वचनबन्धुषु। ८५।

कथं सपक्षः'। 'समानस्ये'ति योगविभागादिति वृत्तिः। कथं तर्हि 'समा- नपक्ष.'। वेति केवलमनुवृत्तिनियमात्। यद्वा अव्ययानामनेकार्थत्वात् सहशब्दस्य समानार्थस्य सभावे सपक्षः। समानशब्दे तु समानपक्ष इति भागवृत्तिः॥

## विभाषोदरे । ८८ ।

कथं 'स्वं सोदरस्यातिमदोद्धतस्ये'ति भट्टिः, 'अपन्थानं तु गच्छन्तं सोदरोऽपि विमुञ्चति' इति मुरारिः, 'तीर्थे ये' (६-३-८७) इत्यनुवृत्तेर्यत्प्रत्ययान्त एवोदरे सभावात् । उच्यते । 'समानस्य च्छन्दसि' (६-३-८४) इत्यत्र योगविभागेन सभाव इति सोमनन्दी । सहशब्दस्य समानार्थस्य 'वोपसर्जनस्य' (६-३-८२) इति वा सभावो वाच्यः । तथा च 'त तु देशं न पश्यामि यत्र भ्राता सहोदरः' इति दृश्यते । 'सोदराद्य' (४-४-१०९) इति तु भावियप्रत्ययमाश्रित्येति तत्र न्यासः ॥

## कोः कत्तत्पुरुषेऽचि । १०१ ।

कथं 'कुक्षि. प्रयुक्तें'ति । उच्यते । 'अर्थे विभाषा' (६-३-१००) इत्यनुवृत्तेर्व्यवस्थितविभाषात्वात् । असाधुर्वा ॥

'कूपदेशप्रविष्टोऽय वारितो न निवर्तते ।
न निमज्जत्यधो यावन्नरोऽपि च घटोऽपि च' ॥

इति शूलपाणि. । अर्थो बहुव्रीहिणापि घटते ॥

## उपसर्गस्य घञ्यमनुष्ये बहुलम् । १२२ ।

कथं 'महाबलपरीवारो महाश्वापपतिर्बलिरि'ति, मनुष्यसमुदायत्वाद् बलस्य अमनुष्य इति प्रसज्यप्रतिषेधात्, तथा 'प्रतीहार' इति । उच्यते । बहुलवचनान्मनुष्येऽपि क्वचित् । 'अन्येषामपि' (६-३-१३७) इति वा दीर्घ. ॥

इति शरणदेवविरचितदुर्घटवृत्तौ
षष्ठाध्याये तृतीयः पादः ॥

---

## अथ चतुर्थः पादः ।

## अङ्गस्य । १ ।

## हलः । २ ।

–कथं 'तृतीया' । उच्यते । 'तृतीया' इति निर्देशात् । अण इत्यनुवृत्तेर्वा ।

कथं 'पितृणामि'त्यत्र दीर्घः । उच्यते । 'न तिसृचतसृ' (६-४-४) इति प्रतिषेधादन्नाणिति नानुवर्तते । एवं वृत्तावुक्तम् ॥

## नामि । ३ ।

कथं तर्हि 'नदीनां च नखीनां च शृङ्गिणां शस्त्रपाणिनाम् । विश्वासो नैव कर्तव्यः' । अत्र नखिशब्दस्येन्नन्तत्वान्नुटोऽभावात् । आगतनुट्कस्यामो ग्रहणाददीर्घः । तथा 'शस्त्रपाणिनामि'त्यत्र कथमदीर्घः । उच्यते । नखशब्दान्नखेनातिक्रामतीत्यस्मिन्नर्थे 'प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च' इति णिजन्ताद् 'अच इः' इति इप्रत्ययान्तोऽयं नखिशब्दः । तथा अत्यर्थं शस्त्रेण पणते व्यवहरति 'बहुलमाभीक्ष्ण्ये' (३-२-८१) इति णिनिप्रत्ययान्तोऽयं शस्त्रपाणिशब्दः । 'सुप्यजातौ' (३-२-७८) इति कश्चित् । कथं 'दरिद्राजागृदीधीनां ये चैकस्वरधातवः' इति, ह्रस्वान्ताभावात् नुटोऽभावात् । उच्यते । 'इक्श्तिपौ धातुनिर्देशे' इति इकि 'यीवर्णयोर्दीधीवेव्योः' (७-४-५३) इति ईकारलोपे ह्रस्वान्तान्नुट् ॥

## सर्वनामस्थाने चासम्बुद्धौ । ८ ।

कथं 'गुप्तिज्किद्भ्यः सन्' (३-१-५) इति । उच्यते । अत एव निर्देशाल्लक्ष्यपरतन्त्रत्वाद्वा शास्त्रस्य । सन्देहप्रसक्तेश्च नात्र दीर्घलोपौ ॥

## अत्वसन्तस्य चाधातोः । १४ ।

कथं गोमन्तमिच्छतीति क्यचि क्विपि 'क्यस्य विभाषा' (६-४-५०) इति यलोपे 'गोमानि'ति दीर्घः । उच्यते । आनन्तर्यादसन्तस्यैवाधातोरिति प्रतिषेधः । 'चकाराद्वा धातोरपि' इति 'उगिदचाम्' (७-१-७०) इत्यत्र न्यासः ॥

## असिद्धवदत्राभात् । २२ ।

## अनिदितां हल उपधायाः क्ङिति । २४ ।

कथं 'राजा प्रकृतिरञ्जनादि'ति रघुः, 'रजकरजनरजस्सूपसङ्ख्यानम्' इति वचनात् । उच्यते । रजस्साहचर्याद्दीणादिकस्य तत्र ग्रहणम् । ल्युटि तु रञ्जनमित्येव भविष्यति ॥

## घञि च भावकरणयोः । २७ ।

कथं 'रङ्गरचनाम्' । उच्यते । 'रञ्जेश्च' (६-४-२६) इत्यत्र 'दशसञ्ज-

'यञां शपि' (६-४-२५) इत्यनुवृत्तेर्भौवादिकस्य ग्रहणं, तस्यैवानुवृत्तेः। दैवादिकस्य रञ्ज इति रक्षितः॥

## शास इदङ्हलोः। ३४।

कथं 'शास्यैरर्थिनिभैर्दुष्टैरि'ति (भट्टिः?)तथा 'अनाशास्यजयो ययावि'ति रघुः, 'एतिस्तुशास्वृदृजुषः' (३-१-१०९) इति क्यपि अनेनेत्त्वप्राप्तेः। उच्यते। शासनं शासः। ततः 'तत्करोती'ति णिचि यत्। 'शसु हिंसायामि'त्यतो 'हन्त्यर्थाश्चे'ति चुरादिपाठाण्णिचि यदिति धातुप्रदीपटीका। कथं 'शास्तिरि'ति, इत्त्वप्राप्तेः शिष्टिरिति प्राप्नोति। उच्यते। 'शसु हिंसायाम्'। 'हन्त्यर्थाश्च' इति णिचि 'क्तिन्नाबादिभ्यः' इति। प्रशस्तिरिति तु 'शंसु स्तुतावि'त्यतः। 'प्रशंसे'ति प्रशंसावचनैः' (२-१-६६) इति निर्देशात्॥

## अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति। ३७।

कथं 'नितान्तदीर्घैर्जनितां तपोभिरि'ति कुमारः, नलोपप्राप्तेः। उच्यते। तनोतेराधृषीयस्य णिचि रूपम्। कथं 'हन्व' इति। उच्यते। वस्रो दन्त्योष्ठ्यवकारत्वेन झल्परत्वाभावात्॥

## वा ल्यपि। ३८।

कथं 'चतुर्दिगीशानवमन्य मानिनी'ति कुमारः, व्यवस्थितविभाषया नकारस्य नित्यलोप इति वृत्तिः। उच्यते। 'मन स्तम्भ' इत्यस्मान्नित्यण्यन्ताश्चुरादय इति उदात्तोपदेशस्य रूपम्। अवमत्येति वा पाठ इति रक्षितः॥

## भ्रस्जो रोपधयो रमन्यतरस्याम्। ४७।

कथं भृष्टं (लिचितम्?)। उच्यते। व्यवस्थितविभाषया सम्प्रसारणविषये रम् नास्तीत्येकः। सम्प्रसारणस्य बलीयस्त्वादिति भाषावृत्तिः। पूर्वविप्रतिषेधात् सम्प्रसारणे सकृद्गतिन्यायादिति वामनः॥

## णेरनिटि। ५१।

कथं 'गणेयं सङ्ख्येयम्' इत्यमरः, णिलोपप्राप्तेः। उच्यते। 'क्यस्य विभाषा' (६-४-५०) इत्यनुवृत्तेर्व्यवस्थितविभाषात्वादिति। 'चिन्तिपूजिकथि' (३-

३-१०९) इत्यादिना अकारे विधातव्ये अङो विधानाद् (अल्लोपस्य?) अनित्यत्वाद्वा। एवञ्च चिन्तिया पूजिया इति। 'गैण्याः कपर्दिका' इति गणयतेर्णिलोपे यति॥

## घुमास्थागापाजहातिसां हलि। ६६।

कथं 'संस्थाः', 'स्थः क च' (३-२-७७) इति क्विपि ईत्त्वप्राप्तेः। उच्यते। 'स्थे च भाषायाम्' (६-३-२०) इत्यत्र चेष्टाव्यावृत्तये गापाग्रहणादीत्त्वाभावोऽनुमीयते इति रक्षितः (?)। क्विपि ईत्वप्रतिषेध इति तु भाष्यम्॥

## न ल्यपि। ६९।

कथम् 'आपीय मातरेवे'ति मयूरः, पिबतेरनेनेत्त्वनिषेधात्। उच्यते। 'पीङ् पान' इत्यस्य रूपम्। 'तेनोद्गीय खलेने'ति तु चिन्त्यमिति भाषावृत्तिः। चिन्ता च—'मयतेरिदन्यतरस्याम्' (६-४-७०) इत्यतोऽन्यतरस्यांग्रहणस्य सिंहावलोकनन्यायादनुवृत्तेः॥

## न माङ्योगे। ७४।

कथं 'मा निषाद! प्रतिष्ठां त्वमगमः शाश्वतीः समाः'। तथा 'मा वालिपथमन्वगा' इति, माङिति। माशब्दे तु 'माङि लुङि' (३-३-१७५) इति कालसामान्ये लुङ् स्यात्। उच्यते। 'आशंसायां भूतवच्च' (३-३-१३२) इत्यतिदेशाल्लुङ्। यद्वा त्वमगम इत्यत्र तुशब्दः पुनरर्थे। माशब्दस्य लक्ष्मीवाचिनो नञा बहुव्रीहौ 'गोस्त्रियोरुपसर्जनस्य' (१-२-४८) इति ह्रस्वे हे अलक्ष्मीक! पुनः प्रतिष्ठां न गच्छेरित्यर्थः। वाल्मीकेः स्वतन्त्रत्वाद्वा। 'ते हि भगवन्तो वाग्विषये स्वतन्त्रा.' इत्यनुन्यासः। अन्वगा इत्यत्र अन्वेति सम्बोधनमिति स एव॥

## अचि श्नुधातुभ्रुवां य्वोरियङुवङौ। ७७।

कथं 'त्र्यादिः'। अङ्गनिमित्ते अजादिप्रत्यये इयङ्विधानात्। (कथं दुर्धिय, इति।) उच्यते। अनिर्दिश्यमानस्यापि समासाभ्युपगमात्। एवञ्च श्रवणे धीरस्येति श्रवणधियेति भाषावृत्तिः। तथा 'मन्दधियां सुखप्रतिपत्तय' इति। व्रजन्ति ते मूढधियः पराभवमि'ति। वातप्रमीशब्दस्य नास्ति यण्। वातवत् प्रमीयते

१. 'णिलोपस्य' इति स्यात्. २. 'गण्य तु चिन्त्यम्' इति गणेयशब्देऽमरटीकायां सर्वानन्दः. ३. 'अवि शब्द' इत्यस्य पचाद्यजन्तस्य रूप स्यात्.

इत्युणादौ माधातोरीप्रत्ययान्तोऽयम् । 'वातप्रमीः' इति सूत्रे निपातितत्वाद् अधातुत्वात् । 'वातप्रमीर्वातमृग' इत्यमरे साहचर्यात् पुम्स्त्वम् । अन्यामिपूर्वत्वे वातप्रमीम् । शसि दीर्घत्वे च वातप्रमीन् । ङौ सवर्णदीर्घत्वे वातप्रमीति (प्र)सिद्धपदम् । 'योषिति वातप्रमीः समीरमृगे' इति (वात) स्त्रीत्वे तु कृदिकारात् ङीष् । सौ वातप्रमी । शसि जसि वातप्रमीरिति । ङौ 'ङेराम्' (७-३-११६) इत्यामि वातप्रम्यामिति । (घिवत् पे दोरगाः ?) इति लिङ्गकारिका । ततश्च द्विलिङ्गताम्य ॥

## मितां ह्रस्वः । ९२ ।

कथं 'नियमयति' 'संयमयति'. 'यमोऽपरिवेषणे' इति मित्त्वनिषेधात् । उच्यते । 'यमस्समुपनिविषु च' (३-३-६३) इत्यप्प्रत्ययान्तान्नियमसंयमशब्दात् 'तत्करोती'ति णिचि रूपमिति धातुप्रदीपः । कथं 'संक्रामयति' 'उपक्रामयती'त्यादि । उच्यते । 'वा चित्तविरागे' (६-४-९१) इति वाग्रहणानुवृत्तेर्व्यवस्थितविभाषात्वात् संक्रामयतीत्यादिसिद्धिरिति भाषावृत्तिः । एवञ्च 'स तैराक्रामयामासे'ति, 'अन्यन्तारमादिश्य धुर्यान् विश्रामयेति स' इति रघु । 'निशामय तदुत्पत्तिमि'ति चण्डी । 'शम लक्ष आलोचन' इति चौरादिकालोटि । ज्ञापयितुं बोधयितुमिष्यमाणो ज्ञीप्स्यमान इति 'श्लाघह्नुङ्' (१-४-३४) इत्यत्र वृत्तिः । 'मारणतोषणनिशामनेषु ज्ञा' इति घटादौ पठ्यते । निशामन चक्षुस्साधनम् । निशामनं ज्ञानमात्रमिति 'श्लाघह्नुङ्' इत्यत्र न्यासरक्षितौ । कथं तर्हि 'ज्ञापयतीति ज्ञापकं ज्ञापनमि'ति । उच्यते । व्यवस्थितविभाषात्वादेव । कथं 'कमलवनोद्घाटनं कुर्वते ये' इति मयूरः । तथा 'उद्घाटयती'ति । उच्यते । 'घट सङ्घात' इत्यस्य चौरादिकस्यामित्त्वात् । कथं 'चालयन् सकला पृथ्वीमि'ति, 'कम्पने चलिः' इति घटादित्वात् । उच्यते । उच्चाटनेऽत्र चलिरिति, व्यवस्थितविभाषात्वादेव वा । चलयन्निति (वा) पाठः । एव 'चालयन् सर्वगात्राणी'ति ॥

## हुझल्भ्यो हेर्धिः । १०१ ।

कथं 'रुदिहि', धिभावप्रसङ्गात् । उच्यते । 'निर्दिश्यमानस्यादेशा भवन्ती'ति । इह तु अन्तरङ्गत्वादिटा व्यवधानात् । 'भिन्धकी'त्यत्र परत्वाद्धिभावः ॥

---

१. 'वोपालिताद्' इति स्यात् । यत इद वचन वातप्रमीशब्दव्याख्याया भानुजिदाक्षितोऽनेन वचनेन वोपालितं स्मरति.

## श्नसोरल्लोपः । १११ ।

कथं 'निरस्यति' । निरनुबन्धकपरिभाषया अस्तेर्ग्रहणात् । (यत्तु?यैस्तु) प्रत्ययविधिविषयमित्युच्यते तेषां विकृतिनिर्देशाल्लिङ्गात् नास्यतिग्रहणम् । यत्तु रक्षितेनोक्तं विकृतिनिर्देश उत्तरसूत्रे निर्देशभेदार्थ इति, तत्तु मन्दधियां सुखप्रतिपत्तये ॥

## न शसददवादिगुणानाम् । १२६ ।

कथं 'वेमुश्च केचिद्रुधिराणी'ति चण्डी । दन्तौष्ठ्यवकारत्वात् । अत्र हि 'ववमुरि'ति भट्टिप्रयोगाद् दन्तौष्ठ्यवादिग्रहणमिति रक्षितः । 'ववलिरे वलिरेचितमध्यमा' इति । दन्तौष्ठ्यवादिग्रहणादिति वर्णदेशिनाम् । उच्यते । 'अत एकहल्मध्ये' (६-४-१२०) इत्यत्रानादेशशसददवादिगुणानामिति कर्त्तव्ये योगविभागादस्यानित्य*त्वादिति केचित् ॥

## अर्वणस्त्रसावनञः । १२७ ।

कथं 'श्रयीकृतप्रग्रहमर्वतां व्रजा' इति माघः । 'मघवद्वज्ञलज्जानिदान-मि'ति । 'अर्वणस्तृ मघोनश्च न शिष्यं छान्दस हि तत्' इति भाष्यात् । उच्यते । छान्दसा अपि क्वचिद् भाषायां प्रयुज्यन्त इति । बहुलवचनाद्वा भाषायाम् ॥

## पादः पत् । १३० ।

कथं 'पादे लुठति', एकादेशस्य परं प्रत्यादिवद्भावात् । उच्यते । 'स्थानिवद्भावो भवति विप्रतिषेधेन' इति स्थानिवत्त्वात् ॥

## आतो धातोः । १४० ।

कथं 'क्त्वो ल्यप्', अधातुत्वात् । उच्यते । निपातनाद्, योगविभागाद्वा, एकदेशानुकरणाद्वा, 'आतोऽनाप' इति भाष्याद्वा ॥

## टेः । १५५ ।

कथम् 'अभिषयति', आर्मादशब्दे णिचि णाविष्ठवदित्यातिदेशाद् अनेन टिलोपात् । उच्यते । 'संग्राम युद्ध' इति संग्रामयतेरेव सोपसर्गादिति नियमात् फिरपाद्गि 'प्रकृत्यैकाच्' (६-४-१६३) इतीह प्रकृतिभावात् । णिचो ष्युरति-

* 'सर्वमि'ति ग पाठः ।

मात्रार्थत्वात् समुदायादाशीःप्रतीतिः । 'प्रातिपदिकाद्धात्वर्थे बहुलम्' इति बहुलवचनाद्वा ॥

## नस्तद्धिते । १४४ ।

कथं ('जनकीयती'ति । उच्यते । अपूर्वस्य भत्वाङ्गत्वाभावप्रसङ्गात् । तदभावस्तु साक्षा*ज्जातेरविधानात् तिङन्ते प्रादय इति एधते इति क्विपि ++++त 'आरातीयः' पथि वीथिर्वीरवीतः वीथिको विधिः को निषेधः?) इति । तथा 'येषां शाश्वतिको विरोधः', 'अव्ययानां भमात्रे टिलोप' इति वचनात् । उच्यते । 'दित्यदित्यादित्य' (४-१-८५) इत्यत्र 'बहिषष्टिलोपश्च' इति वार्तिके बहिर्ग्रहणात् तस्यानित्यत्वादिति तत्रैव वृत्तिः ॥

## ओर्गुणः । १४६ ।

कथं 'धाम स्वायम्भुवं ययुरि'ति कुमारः । उच्यते । 'संज्ञापूर्वको विधिरनित्य' इति । कथं 'भूयान् भूम्नी'ति, इकारलोपस्य स्थानिवद्भावात् गुणप्राप्तेः । उच्यते । दीर्घादेशसामर्थ्यान्न गुणः । 'बहोर्नञ्वदुत्तरपदभूम्नि'(६-२-१७५) इति निर्देशाद्वा । कथं 'पट्वी'ति । उच्यते । 'नस्तद्धिते' (६-४-१४४) इति तद्धितग्रहणानुवृत्तेः ॥

## यस्येति च । १४८ ।

कथम् 'उपाध्यायी', यावता 'इङश्च' (३-३-२१) इत्यत्रोक्तम् 'अपादाने स्त्रियामुपसङ्ख्यानं तदन्ताच्च वा ङीप्' इति ङीपि ङीपो बहुलपादीयस्य स्वादित्वबाधाद् भत्वाभाव । उच्यते । 'वा च ङीपि'ति 'स्त्रियामि'ति प्रकरणे द्रष्टव्यम् । इह तु प्रसङ्गेनोक्तमिति रक्षितः । कथं 'मत्वर्थीयमि'ति । 'रोगाख्यायां ण्वुल् बहुलम्' (३-३-१०८) इत्यत्र 'मत्वर्थाच्छ' इति वार्तिकेन च्छप्रत्ययविधानाद् भत्वाभावात् । उच्यते । बहुलवचनादेव । कथं 'वृक्षे' इति, ङौ अनेन लोपात् । उच्यते । 'श्या प्रतिषेध' इति वचनाद् दीर्घस्य ग्रहणात् । ह्रस्वे हि

१ 'आरातीय' इत्यादि 'निषेध' इत्यन्तो ग्रन्थ आरातीयशाश्वतशब्दयाष्टिलोपाक्षरणपर्यनुयोगपर. प्रतिभाति । वाक्य ॥ बहसबद्ध लक्ष्यते.

* 'ज्ञनेर' ख.पाठ·

तपरकरणात् दीर्घस्य प्राप्तिरेव नास्तीत्यनर्थकं प्रतिषेधः स्यात् । तस्मात् दीर्घस्यैव ग्रहणम् । तपरकरणं तदा मुखसुखार्थमिति रक्षितः ॥

इति शरणदेवविरचितदुर्घटवृत्तौ

षष्ठाध्याये चतुर्थः पादः ।

---

अथ सप्तमाध्याये प्रथमः पादः ।

## युवोरनाकौ । १ ।

## अतो भिस ऐस् । ९ ।

कथं 'मान्यचेरेभिर्गन्धचेरेभिः' इति चौद्रप्रयोगः । बहुलग्रहणमिहाभिसम्बध्यते । तेन क्वचिदेस्य न भविष्यति ॥

## टाङसिङसामिनात्स्याः । १२ ।

कथम् 'उदधिस्योत्तरे कूले मूनः क्रिमनुशोच्यते' इति वृद्धिः, अत इत्यनुवृत्तेः । उच्यते । उदधिमिच्छतीति क्यचि 'सर्वप्रातिपदिकेभ्यो लालसायामसुग्वक्तव्य' इत्यत्र 'सुगित्येके' इति सुगागमे 'अ प्रत्ययात्' (३ ३ १०२) इत्यकारे उदधिस्येति स्यात् । उद(धिभायात्[२] धीहावान्) । चार्वी बुद्धिस्तत्सम्बन्धादाचार्योऽपि चार्वीतिवत् । अचि(रा[१]त्रा) उदधिस्या(वा)नपि पुरुष (चारु[२] उ)दधिस्य । यलोपस्यासिद्धत्वानित्यत्वाद्गुण । कथं 'मा मा सखेऽवसन्तस्य सुतोऽह विजने वने' । उच्यते । अवदतीति नियापदमिदं वर्तते । (ना[१]) 'नश्छव्यप्रशान्' (८-३-७) इति रुत्वं न भवति, असंहिताश्रयत्वात् । कथम् 'अतिजरसस्य भिक्षुस्य कन्था वर्षशत गते'ति कव्यापवृत्ति । उच्यते । असाधुरेवायम् । यद्वा ङसिपूर्वनिपातेन 'अत' इत्यनुवृत्तेरनित्यत्वात् । तेन भिक्षुस्येति । अतिजर स्यति नाशयति, मूलविभुजादित्वात् कप्रत्यय, अतिजरस, तस्य । कथं 'दैरिद्रस्ये'ति । उच्यते । 'ह्वापोस्मशाच्छ्रदगोर्वेत्कुन्म्' (६-३-६३) इति ह्रस्वत्वेनेति तत्र वृत्ति । सौनस्याद्वा । कथं 'पुत्रादेशात् परात्म' इति । 'ङसिङ्योः' (७ १-१५) इति पूर्व

---

१ 'ह्र[illegible] (६ ४ ११४) इति गुर्जरप्रयोग । तत्र हि आना[illegible] शाब्द इति हि भाष्यम् । ८ [illegible] । गु अदन्तत्वात् इत्य स्यादित्यापत्ति

निपातव्यभिचारादस्यानित्यत्वादिति श्रीकण्ठः । *सुदलश्च । 'एकादाकिनिच्चासहाय' (५-३-५२) इत्यत्र कन्लुकौ चानुवर्तेते । तत्र महाविभाषया प्रकृतिश्रवणे सिद्धे लुग्विधानं सर्वकार्याभावार्थमिति 'अट्कुपु' (८-४-२) इति सूत्रे रक्षितः । 'शक्नुवन्ति चैकैकशः परस्परसहिता' इति न्यासेनोक्तसिद्ध्यर्थम् 'एकं बहुव्रीहिवत्' (८-१-९) इत्यतिदेशा(र्थो?) 'न बहुव्रीहौ' (१-१-२९) इत्यत्र सर्वनामनिषेधो नात्र द्रष्टव्यः, आतिदेशिके बहुव्रीहौ तस्यानिष्यमाणत्वात् । एतच्च 'आद्यन्तवदेकस्मिन्' (१-१-२१) इति निर्देशात् सर्वादिपाठाच्च ॥

## नपुंसकाच्च । १९ ।

कथम् 'अमरयाख्येये दधिसुमनसी' इति, परवल्लिङ्गतायां स्त्रीत्वे शीभावाभावात् । उच्यते । असाधुरेवायम् । 'लिङ्गमशिष्यं लोकाश्रयत्वादि'ति (वा) वाच्यम् ॥

## अतोऽम् । २४ ।

कथं 'मकारस्य मकारवचनं मोऽनुस्वारनिवृत्त्यर्थम्' इति वृत्तिः । अमोऽम्वचनं लुङ्निवृत्त्यर्थमिति युज्यते । उच्यते । अकारसहितो मकारो मकारः । स चामेव ।.अथवा अकारस्यामिपूर्वत्वेन लुका वा निवृत्तिः । प्रत्ययविशेषात् तत्परित्यज्य मकारस्येत्युक्तम् । अनुस्वारनिवृत्त्यर्थमित्यत्रार्थशब्दो निवृत्तिवचनः अनुस्वारनिवृत्तेर्निवृत्तिरित्यर्थः । लुका ह्यनुस्वारनिवृत्तिः स्यादिति तन्निवृत्तेर्लुकोऽपि निवृत्तिरित्यर्थः । अनुस्वारभाविनि मकारेऽनुस्वारशब्दो वर्तते, यथा सम्प्रसारणभाविनि रेफे सम्प्रसारणशब्द इति 'न सम्प्रसारणे सम्प्रसारणम्' (६-१-३७) इत्यत्र भाष्यम् । यद्वा लुकः प्रकृतत्वाद् 'अनुस्वारनिवृत्त्यर्थमि'त्यत्र लुको निवृत्तिः स्वशब्दादेव । तन्निवृत्त्यर्थमित्यर्थः ॥

## समासेऽनञ्पूर्वे क्त्वो ल्यप् । ३७ ।

कथं 'न्यधनं त्यज्य गच्छती'ति । उच्यते । 'वा च्छन्दसी'ति वाच्ये 'क्त्वापि च्छन्दसि' (७-१-३८) इति वचनमसमासेऽपि ल्यबर्थम् । तेन 'अर्च्य देवानागत' इति 'क्त्वापि च्छन्दसि' इत्यत्र न्यासः । अतश्छान्दसा अपि क्वचिद् भाषायां प्रयुज्यन्त इति भाषायामपि सिद्धम् । अपिशब्दस्य सर्वोपाधिव्यभिचारार्थत्वाद्वा भाषायामसमासे ल्यप् । अन्ये 'धन सन्त्यज्य गच्छन्ती'ति पठन्ति ॥

---

* 'सादलश्च' इति क.पाठः.

## त्रेस्त्रयः । ५३ ।

कथं 'त्रीणा (मणीमुद्राप्यापु¹) गोत्रेषु समागमम्' इति (वृद्धिन्द¹), छन्दांसि त्रीणामित्येव भवतीति भाषावृत्ति । उच्यते । छान्दसा अपि कचिद् भाषाया प्रयुज्यन्त इति भाष्यम् ॥

## ह्रस्वनद्यापो नुट् । ५४ ।

कथं 'तनिपतिदरिद्राणामि'ति । उच्यते । 'ङ्यापो सञ्ज्ञाच्छन्दसोर्बहुलम्' (६ ३-६३) इति ह्रस्वत्वे । एतच्च 'इद्दरिद्रस्य' (६-४-११४) इति सिद्धये वृत्तिकृता व्याख्यातम् । यद्वा समाहारैकत्वे ह्रस्वे चैकशेषेण भविष्यति ॥

## आङो यि । ६५ ।

कथं 'पुमान्स्त्रानुपालभ्यो (दैवतान्तरेभ्यो¹) तपौरुप, आङा सहैकादेशस्य (स'पर)म्पत्यादिवद्भावात् नुमो भावात् । आगमशासनानित्यत्वात् ॥

## उपसर्गात् खल्घञोः । ६७ ।

कथं 'दुरालभ', दु खेनालभ्यत इति खलि नुम् स्यात् । उच्यते । आगमशासनानित्यत्वान्नुमभाव । 'निर्लाभा वाणिज्ये' इति । प्रादिसमासेन । भावे घञ् । बहुव्रीहिणा वा । कथं 'राष्ट्रालम्भ' । चिन्त्यमिति भाषावृत्ति ॥

## न सुदुर्भ्यां केवलाभ्याम् । ६८ ।

कथम् 'अतिसुलभमतिदुर्लभमि'ति । उच्यते । प्रादिसमासेन । 'अते कर्मप्रवचनीयत्वादि'ति न्यास ॥

## इकोऽचि विभक्तौ । ७३ ।

कथं 'प्रमृत्व' (३-१-१४०) इति निर्देश । द्वन्द्वे एकत्वे ह्रस्वत्वे नुम् स्यात् क्लीवत्वे । 'हल्मूत्रयो पुन' (३ २ १८३) इत्येतद्वदुवद् स्यात् । उच्यते । निर्देशादेव । छान्दसत्वाद्वेत्यद् ॥

## शप्श्यनोर्नित्यम् । ८१ ।

कथं 'कुर्वन्ती व्यवहरणदा' इति चण्डी । आरम्भसामर्थ्यान्नित्ये लब्धे नित्यग्रहणं नियमार्थमित्यवधारणार्थम् । तेनान्यत्रानकारान्तात् क्वचिन्निरस्य । तेन कुर्वती

---

१ 'दैवत दार्वीरा' इति वा 'दैवाभ्याहतपौरुष' इति वा पाठ स्यात्

कुर्वन्तीति सिद्धमिति भाष्यम् । उत्तरार्थेऽप्युत्तरत्रैव कृतं स्यात् ॥

## अनङ् सौ । ९३ ।

कथम् 'अर्जुनस्य सखा कृष्णः कृष्णस्य सखिरर्जुनः' इति भारतः । उच्यते । 'नहि व्यासप्रभृतीनधिकृत्याष्टाध्यायी कृता । ते हि भगवन्तो वाग्विषये स्वतन्त्रा' इत्यनुन्यासः । यद्वा सखाय सखित्वं करोतीति णिचि णिलोपे 'अच इः' इति इकारे सखिरिति ॥

## ऋत इद्धातोः । १०० ।

कथम् 'उद्गिरणमि'ति, 'इत्त्वोत्वाभ्यां गुणवृद्धी भवतो विप्रतिषेधेने'ति । इत्त्वमपि भवति । एवं 'किरणोत्तमयूखांश्वि'ति । 'कृपृवृजिमन्दिनिधाञः क्युः' इति वा क्युः ॥

इति शरणदेवविरचितदुर्घटवृत्तौ

सप्तमाध्याये प्रथमः पादः ।

---

## अथ द्वितीयः पादः ।

## सिचि वृद्धिः परस्मैपदेषु । १ ।

## एकाच उपदेशेऽनुदात्तात् । १० ।

कथं 'प्रवेता', वीभावे कृते स्थानिवत्त्वादुदात्तत्वात् सेट्कत्वाद् वयितेति स्यात् । उच्यते । 'गणस्थमूदन्तमि'ति । गणस्थग्रहणं नागणस्थनिवृत्त्यर्थं, किन्तु स्वरूपग्रहणम् । नित्यशब्दान्वाख्याने अस्तेः प्रसङ्गे भवतेः प्रयोग इति । यद्वा 'हनो वध लिङि' । 'लुङि च' (२-४-४३) इति वधादेशो यथोदात्तः पठ्यते तथा वीभावोऽपि । कथं 'भरित' 'लज्जितमि'ति । भृतं लग्नमिति स्यात् । उच्यते । भरलज्जाशब्दाभ्यां तारकादित्वादितच् । एवं 'मनीषितं [illegible] हितमि'ति । मनस ईषा मनीषा । तत इतचि मनीषितम् ॥

## श्र्युकः किति । ११ ।

कथम् 'उदीर्णरागप्रतिरोधकं जनैरि'ति । तथा 'यावद्यावदुदीरितामि'ति ।

---

१. अस्तेरिति । अस्तेः प्रसङ्गे यथा भवतेः प्रयोगः, एवम् अजेः प्रसङ्गे वयतेः प्रयोग इत्यर्थः स्यात् । 'अजेः प्रसङ्गे वयते.' इत्येव वा पाठो भवेत्.

'ऋृ गतावि'त्यस्य क्र्यादिकस्योदीर्णमिति । 'ईर गतावि'त्यस्योदीरितमिति । कथं ('दैवारुतो वि ? )गिलितो रुचकेने'ति । गीर्ण इति हि स्यात् । उच्यते । गिरते- र्घञर्थे कविधाने इत्त्वे रपरत्वे च रलयोरेकत्वस्मरणाद् गिल इति निष्पाद्य ततो णिजन्तान्निष्ठायाम् ॥

## श्वीदितो निष्ठायाम् । १४ ।

कथम् 'अत्रार्थे यतितमि'ति, 'यती प्रयत्ने' इत्यस्य यत्तमिति स्यात् । उच्यते । 'यत निकारोपकारयोः' इत्यस्य णिचोऽनित्यत्वात् ॥

## यस्य विभाषा । १५ ।

कथम् 'आखेटके तया नीतः (शुद्धा तु!) भा(वि)तः पट' इति । 'सेऽसि- चि' (७-२-५७) इत्यादिना नृतेर्विकल्पे 'यस्य विभाषा' इति निषेधे सिद्धे नृति- धातोरीत्त्वेनास्यानित्यत्वज्ञापनात् । (न च लक्षणस्थिता गतावेव!) एवं 'पतित' इत्यपि । 'द्वितीया श्रितातीतपतित' (२-१-२४) इति निर्देशाद्वा । एवं 'तनिपति- दरिद्राणाम्' इति विभाषा । 'पत गतावि'त्यस्य (पातितमिति) रूपम् । 'तनि- पती'त्यादौ नास्य ग्रहणम् अण्यन्तसाहचर्यात् ॥

## घुषिरविशब्दने । २३ ।

कथम् 'उच्चैर्घुष्टं तु घोषणमि'त्यमरः, अविशब्दन इति निषेधात् । उच्यते । अलघणेतिवदल्पार्थे नञ्विधानात् ॥

## वा दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः । २७ ।

कथं 'पूर्त खातादिकर्मणि' । 'पूरी आप्यायने' इत्यस्य पूर्णमिति निपा- तनम् । उच्यते । पृधातोः 'न ध्याख्यापॄमूर्च्छिमदाम्' (८-२-५७) इति नत्व- निषेधात् ॥

## हृषेर्लोमसु । २९ ।

कथं 'हृष्टः पुरुषः' । 'हृषु अलीके' इत्यस्य लोमस्वनेन विकल्पः । पुरु- षादौ 'यस्य विभाषा' (७-२-१५) इति नित्यनिषेधात् ॥

---

१. एवं 'शमोदर्शनेऽनन्तारे'ति (७-२-४९) सूत्रे वृत्तिस्थः पाठः.

२. 'घोषणा' इति तु पाठः अमरकोशेषु दृश्यन्ते.

## आर्धधातुकस्येड् वलादेः । ३५ ।

कथं 'सागरं तर्तुमिच्छति' । 'ती(र्ण?तुं)मि'ति स्यात् । उच्यते । आगमशासनानित्यत्वान्नेट् । ती(र्ण?तुं)मित्यसाधुरेव । कथं 'विश्वस्तो वान्तवृष्टिः' । 'आदितश्च' (७-२-१६) इति चकारस्यानुक्तसमुच्चयार्थत्वाद् 'विभाषा भावादिकर्मणोः' (७-२-१७) इति विकल्प इति वृत्तिर्धातुप्रदीपश्च ॥

## स्नुक्रमोरनात्मनेपदनिमित्ते । ३६ ।

कथं 'चिक्रंसया कृत्रिमपत्रिपङ्क्तेः' इति माघः, क्रमेरनात्मनेपदनिमित्तत्वाद् इट्प्रसङ्गात् । उच्यते । 'वृत्तिसर्गतायनेषु क्रमः' (१-३-३८) इत्यनुवृत्तेः 'अनुपसर्गाद्वा' (१-३-४३) इति पक्षेऽनुपसर्गे उत्साहेऽर्थे आत्मनेपदनिमित्तत्वात् । नैवंचेवं[1], यतः 'तेनायं सत्यात्मनेपदे प्रतिषेधो नास्तीति' इति वृत्तिः, 'योग्यतामात्रेण नात्मनेपदनिमित्ते'ति न्यासः । उच्यते । तर्ह्यागमानित्यत्वान्नेट् । अहेर्जिघृक्षयेति पाठ इति भागवृत्तिः । जिघांसयेति वा पाठः । यद्वा आकृत्रिमपत्रिपङ्क्तिमपि चिक्रंसे इत्यर्थः ॥

## जॄव्रश्च्योः क्त्वि । ५५ ।

कथं 'जूत्वा', अनेनेट्प्रसङ्गात् । उच्यते । जॄष्धातोः सानुबन्धकत्वेनाग्रहणादिति न्यासः ॥

## उपदेशेऽत्वतः । ६२ ।

कथं 'पेचिथ' । उच्यते । 'ऋतो भारद्वाजस्य' (७-२-६३) इति नियमात् । कथं 'तुष्टोथ' 'दुद्रोथ' । पुरस्तान्निषेधप्रकरणप्रणयनात् प्रतिषेधस्य बलीयस्त्वात् क्र्यादिनियमादिति भाषावृत्तिः ॥

## विभाषा गमहनविदविशाम् । ६८ ।

कथं 'विदितः समाययावि'ति भारवि, अनेन कर्तो विकल्पे 'यस्य विभाषा' (७-२-१५) इति निषेधात् । उच्यते । शब्दपरविप्रतिषेधेन विशिना साहचर्याद् विदेर्लाभार्थस्य ग्रहणात् । वेदनं वित्, क्विबन्तादाचारक्विबन्तात्क्तिचि विदित इति तु सुवर्णरेखा ॥

---

१. न चैवमिति । अयमिड्भागममर्थनप्रकारो नोपपद्यत इत्यर्थः ।

## आने मुक् । ८२ ।

कथम् 'अपि शाकं पचानस्ये'ति । उच्यते । आगमानित्यत्वान्न मुगिति न्यासः । 'आतो ङित' (७-२-८१) इतीयादेशोऽपि नास्ति । 'आतिदेशिकं कार्यमनित्यमि'ति अनित्यत्वादिति रक्षितः ॥

## त्रिचतुरोः स्त्रियां तिसृचतसृ । ९९ ।

कथम् 'एको (गः?)विल्लयो गाव' इति, 'बलीवर्दे च गौः पुमानि'ति अर्धनारीश्वरके दर्शनात् स्त्रीगव्यां तिसृभावात् । उच्यते । (पृषत्केषां निषेधेऽपि शिशुरेन्द्रमहरणे पशौ । रश्मौ मूर्खे तु बीरनसि गौः स्त्रीपुरुषयोः?) इति विश्वः ॥

## अदस औ सुलोपश्च । १०७ ।

कथम् 'असुक' इति । 'औत्वप्रतिषेधस्साकच्कस्य वा सादुत्वं चे'ति औत्वाभावे उत्वे च असुक इति वृत्तौ साधितम् । उच्यते । 'जराया जरसन्यतरस्याम्' (७-२-१०१) इत्यतः अन्यतरस्यांग्रहणं मण्डूकप्लुतिन्यायेनानुवर्तते । तस्य व्यवस्थितविभाषात्वात् 'तदोस्सः सावनन्त्ययोः' (७-२-१०६) इति सत्वाभावे 'अदसोऽसेः' (८-२ ८०) इति मत्वोत्वाभ्यां भवितव्यम् ॥

## अचो ञ्णिति । ११५ ।

कथम् 'अतिशायनम्' । उच्यते । 'अतिशायने तमब्' (५-३-५५) इति निर्देशात् ॥

## अत उपधायाः । ११६ ।

कथं 'वाहनम्' । उच्यते । 'वाहनमाहितात्' (८-४-८) इति निर्देशात् । कथं 'भाण्डे भाराः', 'भडि कल्याण' इत्यस्य नुमि उपधात्वाभावात् । 'अण रण भण' इत्यतो 'अमन्ताड्ड' इति डे बाहुलकाद् वृद्धिः । 'पुच्छभाण्ड' (३-१-२०) इति निपातनाद्वा । कथं 'प्रातिपधपदमि'ति, घञि वृद्धेः । उच्यते । 'अनुदात्तं पदमेकवर्जम्' (६-१-१५८) इति निपातनादिति न्यासः । 'खनो घ च' (३-३-१२५) इति घकरणादन्येभ्योऽपि घे पदमिति वा । कथं 'ग्रन्थिमुद्ग्रथयितुं हृद-

१. वचनमिदं भूयिष्ठ लेखकेन स्खलीकृतम् । विश्वकोशवाक्यं तु 'गौः स्वर्गे वृषभे रश्मौ वज्रे चन्द्रमसि स्मृतः । अर्जुननेत्रदिग्बाणभूवाग्वारिषु गौर्मता ॥' इति शिशुपालवधव्याख्याया (४स. १७श्लो.) मल्लिनाथेनोद्धृतम्.

येशे' इति । 'ग्रथ दौर्बल्य' इत्यस्यादन्तस्य चौरादिकस्यानेकार्थत्वात् । कथम् 'अभ्यस्या विद्या' 'समस्या कवेः', ण्यति वृद्धेः । उच्यते । संज्ञापूर्वकविधेरनित्यत्वाद् बाहुलकाद्वा यत् । कथम् 'उद्यमोपरमौ' । उच्यते । 'अड उद्यमे' 'यम उपरमे' इति निर्देशात् । 'नोदात्तोपदेशस्य' (७-३-३४) इति नास्ति, अनुदात्तोपदेशत्वात् ॥

## तद्धितेष्वचामादेः । ११७ ।

कथं 'भेषजं', भिषज(इद)मित्यादिरवृद्धेः । उच्यते । 'भेषजात् ष्यः' (५-४-२३) इति निर्देशाद्गुणोऽवृद्धिश्च । कथं 'ज्यौतिष शास्त्रमि'ति, 'अधिकृत्य कृते ग्रन्थे' (४-३-८७) इति अणि वृद्धेः । उच्यते । संज्ञापूर्वकानित्यत्वादिति भवभूतिः ॥

इति शरणदेवविरचितदुर्घटवृत्तौ

सप्तमाध्याये द्वितीयः पादः ।

---

अथ तृतीयः पादः ।

## देविकाशिंशपादित्यवाड्दीर्घसत्रश्रेयसामात् । १ ।

## द्वारादीनां च । ४ ।

कथं 'शब्दशक्तिस्वाभाव्यादि'ति, तथा 'स्वाभाविकमि'ति, द्वारादिषु स्व-शब्दस्य पाठादैच्प्रसङ्गात् । उच्यते । 'स्वागतादीनां च'(७-३-७) ने निषेधात् । कथं 'द्वारिकः' । स्वर*शब्दसाहचर्यादकारान्तस्य द्वारशब्दस्यैजिति दौवारिकः, हलन्तस्य द्वारिक इति ॥

## हृद्भगसिन्ध्वन्ते पूर्वपदस्य च । १९ ।

कथं 'भावसाध्वसपरिग्रहादभूत् कामसौहृदमुखं मनोहरमि'ति, तथा 'क्षण-

---

१. यद्यपि 'ग्रथ दौर्बल्ये' इति क्वचिदो पाठो नोपलभ्यते, तथापि 'बहुलमेतन्निदर्शनम्' इत्युक्त्या पाठोऽयं कल्पित इत्यभिप्रायः. २. 'यम उपरमे'ति सन्दर्भे यत्र क्वचित् प्रयोगदर्शनेऽपि दौर्बल्यार्थनिर्देशस्योपपत्त्यर्थमाह—अनेकार्थत्वादिति.

---

* 'शब्दस्य सा' क पाठः.

भिन्नसौहृद' इति कुमारः, तथा 'सौहृद्यमि'ति। युवादित्वादणि ब्राह्मणादित्वाद्वा ष्यञि अनेनोभयपदवृद्धौ सौहार्दमिति। उच्यते। संज्ञापूर्वकस्यानित्यत्वात् 'हृद्भग' इत्यस्याप्रवृत्तौ आदिवृद्धिरेव। चान्द्रास्तु 'हृद्भग' इत्यत्र प्रतिपदोक्तस्य हृदयपर्यायस्य हृच्छब्दस्य ग्रहणात् 'हृदयस्य हृल्लेख' (६-३-५०) इति हृदादेशस्यादिवृद्धौ साधयन्ति। किन्त्वेतद् 'हृदयस्य हृल्लेख' इत्यादिसूत्रे वृत्तिग्रन्थेन विरुद्धम्। रक्षितस्त्वाह—'कचित् अर्थवत्परिभाषया 'सुहृद्दुर्हृदौ मित्रामित्रयोः' (५-४-१५०) इति निपातितस्य सुहृच्छब्दस्य योऽवयवो हृच्छब्दस्तदन्तस्योत्तरपदस्य वृद्धिर्न भवतीति व्याचक्षते। समुदायस्तत्र मित्रवचनोऽवयवस्तु निरर्थक' इति॥

## अनुशतिकादीनां च। २०।

कथम् 'आतिशायिक.', अत्रापाठात्। उच्यते। प्रायिकः प्रत्यय इत्युक्तम्। अतोऽस्य साधुत्वम्। कथं तर्हि 'व्याप्तिमातिशयिकेन रसेने'ति घोषः। उच्यते। सूत्रकारादिमतेन। कथं 'पुरीमाजातशात्रवीमि'ति माघः, अत्रापाठात्। उच्यते। आकृतिगणत्वाद् भविष्यतीत्येके। एवं चतस्रो विद्या'श्चातुर्वैद्यमि'ति। असाधुरेव वा॥

## हनस्तोऽचिण्णलोः। ३२।

कथं वृत्रघ्न इदं 'वार्त्रघ्नम्', अनेन तत्वभावात्। उच्यते। धातोः कार्यमुच्यमान तत्प्रत्यये भवतीति वृत्तिः॥

## नोदात्तोपदेशस्य मान्तस्यानाचमेः। ३४।

कथं 'यमथुर्वम आमज्वर', 'अनाचामिकामिवमीनामिति वक्तव्यमि'ति निषेधाभावात्। उच्यते। संज्ञापूर्वकानित्यत्वात्। एवं 'गमकत्वादि'ति च। आम इति चौरादिकस्य णिचि वृद्धौ तत्र मित्त्वं नास्तीति वृत्तिः। कथं 'विश्रामस्थितिहेतवो न गणिता वन्धूपमा पादपा'। 'विश्रामाज्जायते वलमि'ति च। उच्यते। 'अनाचमिकामिवमीनाम्' इत्यत्र केचिच्छ्रमिवमी पठन्तीति रक्षितः। ये तु न पठन्ति तेषां विश्रम इति। तथा च माघ.—'विश्रमार्थमुपगूहमजस्रमि'ति। '(आ!) श्रम निकेत क्रुग गुण चामन्त्रणे' इति चौरादिकस्य वा। 'सूर्यविश्रामभूमि'रित्याद्यन्याय्यमेवेति वृत्तिः। कथम् 'उपरमोचममि'ति। यमिरमी अनुदात्तौ। 'अड उपधे' 'यम उपरम' इति शिष्टप्रयोगात्। अथ मुनित्रयविलक्षणत्वादस्याप्राधान्यम्।

तथा । 'यथालक्षणमप्रयुक्त' इति उपराम उद्याम इत्येव भवतीति भर्तृहरिणा भागवृत्तिकृता चोक्तम् ॥

## इसुसुक्तान्तात् कः । ५१ ।

कथम् 'आकस्मिक', अकस्माच्छब्दादध्यात्मादित्वाट्ठञि इकादेशात् । उच्यते । 'येषा च विरोध शाश्वतिक' (२ ४ ९) इति निर्देशादस्यानित्यत्वात् । अकस्मादिति तकारान्तोऽव्य विभक्तिप्रतिरूपको निपात इति वा । अविभक्त्यन्तस्य जश्त्वेन दकारान्तादपि ॥

## चजोः कु घिण्ण्यतोः । ५२ ।

कथं 'वेदिसम्मार्जदक्षा' इति कुमार, घञि कुत्वात् । 'घञर्थे कविधानमि'ति क । वेदिं सम्मार्ष्टीति कर्मण्यण्, वेदिसम्मार्जी चासौ दक्षा चेति कर्मधारये पुंवत्त्वाद्वा । कथम् 'अविद्य पुरुष शोच्य' इति, ण्यति घञि च कुत्वात् । उच्यते । 'अजिव्रज्योश्च' (७ ३ ६०) इति चकारस्यानुक्तसमुच्चयार्थत्वात् । 'न कादे' (७ ३-५९) इति योगविभागादिति कश्चित् । 'ण्य आवश्यक' (७ ३ ६५) इति वा शोच्यसिद्धि । कथम् 'आलोच' 'लोचृ दर्शन' इत्यतो घञि कुत्वात् । उच्यते । 'लोचृ णद कुप तर्क वृतु वृधु भाषार्थो' इति चारादिकाद् एरचि । एरजन्ताना तु आर्धधातुक इत्यस्य विषयसप्तमीत्व लब्धम् । अत परसप्तमीपक्षे अच् । विषयसप्तम्या तु पचाद्यच् । एव 'प्रपञ्च'शब्द । 'पचि व्यक्तीकरण' इति भौवादिकाद्वा । कथं 'काञ्चा शिक्यमृद्धेदमुञ' इत्यमर । 'कच बन्धने' इत्यत स्वार्थे णिचि एरचि । चकाराद्वा ॥

## इषुगमियमां छः । ७७ ।

कथं 'प्रतीच्छिष्याम्यह मौल्ये ति चण्डी, शिति छत्वविधानात् । उच्यते । इच्छा प्रतिगत प्रतीच्छ । तद्वदाचरिष्यामीति प्रतीच्छशब्दादाचार*क्विपि लृट् । कथं 'निर्गच्छन्नकाले चतुर्थी न पतती'ति, तुकि कर्तव्ये बहिरङ्गस्य छत्वस्यासिद्धत्वात् । उच्यते । 'नलोप सुप्स्वर' (८-२-२) इत्यत्र तुग्विधिग्रहणेनास्यानित्यत्वज्ञापनात् ॥

## पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्छधौशीयसीदाः । ७८ ।

---

* 'क्विबन्ताल्लृट्' इति पाठ

कथं 'व्यतिषे' । एशादेशे पित्वादेशः स्यात् । उच्यते । 'वर्णे यत् स्यात् तच्च विधात्तदादावि'ति 'लिटस्तझयोरेशिरेच्' (३-४-८१) इत्यत्र न्यासः । अन्यथा शेशब्दमेव विदध्यात् ॥

## पुगन्तलघूपधस्य च । ८६ ।

कथं 'ष्ठीवनं' 'सीवनं', गुणसद्भावाद् दीर्घत्वाभावात् । उच्यते । पृषोदरादित्वादगुणो दीर्घश्च । (चाप्रग? चन्द्रगो)मी त्वेतत्सिद्धये 'ष्ठिविसिव्योर्दीर्घश्च' इति सूत्रं पठितवान् । कथं 'भेत्ता' । उच्यते । क्नुसनो कित्वं ज्ञापयति प्रकृतिप्रत्ययादिसंयोगे तत्प्रत्ययनिमित्ते कार्ये गुरुसंज्ञा नाश्रीयते । कथं 'तुलयति स्म विलोचनतारका' इति माघ', 'तुल उन्मान' इत्यस्य गुणभावात् । उच्यते । 'घञर्थे कविधानमि'ति कप्रत्ययान्तात् तुलाशब्दात् तुलया परिच्छिनत्तीति णिचि । एवं 'तुलना' । कथं 'लिखनमि'त्यादि । उच्यते । संज्ञापूर्वकानित्यत्वात् । यद्वा कुट आदिः कुटादिः, कुट् आदिर्यस्येति कुटादि । तत्र एकशेषे 'गाङ्कुटादिभ्य' (१-२-१) इति निर्देशेन ङित्त्वभाव. । ('कृष विलेखन' इति निर्देशात्[1]) । एवं च 'लेखको लेखो लेखिनी' । कथं 'लेखनी'ति । उच्यते । आतिदेशिकं कार्यमनित्यमिति ङित्त्वाभावाद् गुण. 'कृष विलेखन' इति निर्देशात् ॥

## अतो दीर्घो यञि । १०१ ।

कथं 'जयन्ति ते सदा सन्त' इति न्यास', अन्तादेशाकारैकादेशस्य पूर्वप्रत्यन्तवत्त्वेऽनेन दीर्घात् । परं प्रत्यादिवत्त्वे सार्वधातुकत्वात् । उच्यते । 'उभयत आश्रये नान्तादिवदि'ति निषेधात् । एवं तर्हि नान्तादिवत्त्वं, किन्त्वेकदेशविकृतत्वात् सार्वधातुकत्वे भविष्यति । न चैवमुभयत आश्रय इत्यस्य वैयर्थ्यम् । वृक्षाविव्येतदर्थत्वात् । एकादेशस्य पूर्वप्रत्यन्तवत्त्वे प्रातिपदिकावयवत्वं सुपः । परं प्रत्यादिवत्त्वात् 'सुपो धातु' (२-४-७१) इत्यादिना लुक् स्यात् । अन्तवत्त्वाभावान्न भवति । न चात्रैकदेशविकृतत्वम् । उच्यते । अस्या लिङ्गं [विचनं समान?] निर्देशः । तत्रावर्णान्तत्वात् 'सुपि च' (७-३-१०२) इति दीर्घत्वं प्राप्तमेव । एवंविधे एकदेशविकृतपरिभाषया न प्रवर्तितव्यमित्यत्राप्येतदेव लिङ्गम् । 'अन्येभ्योऽपि दृश्यन्ते' (३-२-७५) इति निर्देशो वा ॥

---

१. 'प्रयत्न सवर्णमिति' इति पठितव्य स्यात्.

## सुपि च । १०२ ।

**कथं** 'वृक्षाय', यमावे सन्निपातलक्षणपरिभाषया दीर्घाभावात् । **उच्यते** । 'कष्टाय क्रमणे' (३-१-१४) इति निर्देशादस्या अनित्यत्वात् ॥

## ओसि च । १०४ ।

## आङि चापः । १०५ ।

कथम् 'अखट्वेन', ह्रस्वेऽप्याबन्तत्वादनेनैत्वं स्यात् । तथा चातिखट्वय्यादृष्ये 'हल्ङ्या'दिसूत्रे दीर्घग्रहणं क्रियते । उच्यते । आप इत्याकारप्रश्लेषाद्दीर्घान्तादेवैत्वमिति भाष्यम् । अत एवातिखट्वादित्यादौ या (जनयन्ति² ङ् न भवति) ॥

## ह्रस्वस्य गुणः । १०८ ।

**कथं** 'सुतनु! सत्यमलङ्करणाय त' इति माघ, 'सुतनु! जहीहि कोपम्', तथा 'वरतनु! सम्प्रवदन्ति कुक्कुटा' इति च, अनेन गुणप्राप्ते. । 'ऊङुत' (४-१-६६) इति मनुष्यजातिविवक्षायामूङि 'अम्बार्थनद्योर्ह्रस्वः' (७-३-१०७) इति न वाच्यम् । अनूङन्तस्यापि दर्शनात् 'सुतनो! स्तनौ च दयितोपगमे' । उच्यते । 'कृषिचमितनिधनिसर्जिखर्जिभ्य ऊः' इति ऊप्रत्ययान्तस्तनूशब्दोऽप्यस्ति । 'स्त्रियां मूर्तिस्तनुस्तनूरि'त्यमरः । तत्प्रयोगे 'अम्बार्थनद्योर्ह्रस्व' इति ह्रस्वविधानसामर्थ्यान्न गुण इति । यदि हि स्यात् अम्बार्थानां ह्रस्व इत्युक्त्वा नदीह्रस्व-योर्गुण इति कृतं स्यादिति भागवृत्तिः । **ननु** 'नद्यृतश्च' (५-४-१५३) इति कपात्र भाव्यम् । **उच्यते** । समासान्तविधेरनित्यत्वात् । अन्ये ह्रस्वान्तस्य संज्ञापूर्वकत्वानित्यत्वाद् गुणाभावमाहु. । अत एव 'कुतस्त्य भीरु! यत् तेभ्यो हृतस्त्वोऽपि क्षमामहे' इति भट्टि. । जयमङ्गलाया (च नास्य ++² चानूङन्तस्य) रूप, 'सपदि वारिधरारवभीरव' इति माघेऽनूङन्तस्य प्रयोगात् । कथं 'हे कर्तृ! कुल!' । परत्वाद् गुणेन भाव्यम् । उच्यते । बलीयस्त्वाल्लुक पूर्वविप्रतिषेधाच्च लुकि 'न लुमता' (१-१-६३) इति प्रत्ययलक्षणप्रतिषेधेन सम्बुद्धिपरत्वाभावात् । कथं तर्हि 'हे चारे!' 'हे मुनो!' । 'इकोऽचि विभक्तौ' (७-१-७३) इत्यत्राचीत्यनेन 'न लुमते'त्यस्यानित्यत्वज्ञापनात् ॥

## ऋतो ङिसर्वनामस्थानयोः । ११० ।

कथं 'कर्तॄणि ब्राह्मणकुलानि', परत्वादनेन गुणप्रसङ्गात्। उच्यते। पूर्वविप्रतिषेधेन नुम् भविष्यति ॥

घेर्ङिति। १११।

कथं 'धारिणः', नुमः परत्वाद् गुणप्राप्तेः। उच्यते। 'शलालुनोऽन्यतरस्याम्' (४-४-५४) इति निर्देशात् पूर्वविप्रतिषेधात् ॥

सर्वनाम्नः स्याड्ढ्रस्वश्च। ११४।

कथम् 'अनन्तरायाः प्राप्तेः', नञ्समासे सर्वनामत्वात्। उच्यते। अविद्यमानमन्तरं यस्या इति बहुव्रीहौ कृते निषेधः ॥

ङेराम्नद्याम्नीभ्यः। ११६।

कथं इटः 'क्त्वायां विकल्पः सिद्ध' इति 'क्लिशः क्त्वानिष्ठयोः' (७-२-५०) इत्यत्र वृत्तिः। उच्यते। क्त्वाशब्दस्याजादौ कचित् पाठः क्रियते ॥

इति शरणदेवविरचितदुर्घटवृत्तौ

सप्तमाध्याये तृतीयः पादः।

---

अथ चतुर्थः पादः।

णौ चङ्युपधाया ह्रस्वः। १।

केऽणः। १३।

कथं 'तूष्णीशीलस्तु तूष्णीक' इत्यमरः, तथा 'कुर्वतेऽपि (तु) तूष्णीका नाम गम्भीरचेतसः। लघवो घोषयन्त्येव न कुर्वन्ति कदाचन', 'शीले को मलोपश्च' इति के कृते ह्रस्वप्राप्तेः। उच्यते। 'न कपि' (७-४-१४) इत्यत्र नेति योगविभागः कार्यः। कथम् 'एकः', 'इणभीके'ति के गुणे च ह्रस्वप्राप्तेः। उच्यते। 'केऽच' इति 'केऽट' इति वा कर्तव्ये अण्ग्रहणात् पूर्वेण णकारेण प्रत्याहारादिति न्यासः। चत्वार्यण्ग्रहणानि पूर्वेण णकारेणेति भाष्याच्च। नचा(नट? त्रा-णि)ति। 'आशीष्कः' 'च(ल्लि? ढि)ष्कः' इत्यत्र विसर्जनीयत्वषत्वादेरसिद्धत्वात् प्राप्तेश्चान्तरतम्यात्, न तु सावर्ण्यात् 'नाज्झलौ' (१-१-१०) इति सावर्ण्यनिषेधात् ॥

## एतेर्लिङि । २४ ।

कथम् 'अभीयात् परीयादि'ति वृत्तिः । उपसर्गेण सहैकादेशे एत्युपसर्गयोरविभागात् । अन्तादिवद्भावैकदेशविकृतत्वं नास्तीति, 'उभयत आश्रय' इत्यस्य वा (न समास?) इति ज्ञापकात् । अत एव 'भक्तिनम्रः परीयाः' इति मेघः । उच्यते । 'ज्ञापकसिद्धं न सर्वत्रे'त्येकदेशविकृतद्वारेण विशेषादेशाद्ध्रस्वः ॥

## अकृत्सार्वधातुकयोर्दीर्घः । २५ ।

कथं 'प्रायः पुण्यवता देशे शरदियं प्रावृषायते', हलन्तत्वात् । उच्यते । हलन्तादर्शआदित्वादचि प्रावृषाशब्दात् साध्यम् । 'कालप्रभाता शरदा प्रावृषा तु जलार्णवा' इति संसारावर्त्तः ॥

## रिङ् शयग्लिङ्क्षु । २८ ।

कथं 'जागर्यते' । म्रियत जागर इत्यादौ रिङ्गुणयोः सावकाशत्वे परत्वाद्रिङ् स्यात् । उच्यते । पूर्वविप्रतिषेधात् धातुपारायणे (ज्ञानवृ? जागर्य)त इत्युक्तम् ॥

## गुणोऽर्त्तिसंयोगाद्योः । २९ ।

कथं 'संस्क्रियते' । उच्यते । सुटो बहिरङ्गत्वादसिद्धत्वाद् अभक्तत्वाचेति वृत्तिः ॥

## ह्रस्वः । ५९ ।

कथम् 'ऊचतुः', एकादेशस्यान्तवत्त्वाद्ध्रस्वप्राप्तेः । उच्यते । बहिरङ्गत्वादेकादेशस्येति रक्षितः ॥

## भवतेरः । ७३ ।

कथम् अस्तेर्भूभावे कृते 'बभूवे'ति, भौवादिकनिर्देशात् । उच्यते । भूसामान्यनिर्देशोऽयम् । तच यया कयाचिद्विभक्त्या निर्देष्टव्यमिति भवतिना निर्दिष्टम् । भुव इति न कृतं वैचित्र्यार्थम् ॥

इति शरणदेवविरचितदुर्घटवृत्तौ
सप्तमाध्याये चतुर्थः पादः ।

---

१. अभियात् परियाद् इति प्रयोगविषयमिद चोद्य प्रतिभाति । तत्र दीर्घो न पाठ्यः.

२. 'प्रयत्न सवर्णम्' इति पठनीय स्यात्.

## अथाष्टमाध्याये प्रथमः पादः ।

## सर्वस्य द्वे । १ ।

## नित्यवीप्सयोः । ४ ।

कथम् 'एकश' इति, अनेन द्वित्वमाप्ते । उच्यते । शसा वीप्साया अभिधानात् । एवं 'पदान्येकैकशस्तिङामि'ति *प्रयोगमुखी, तथा 'एकैकश संहता वा' इति कामन्दकीय न घटते । 'एकैकशो देहीति' भाष्य च 'सर्वस्य द्वे' इत्यत्र । एवं (सहि ? तर्हि) 'तान्येकवचनद्विवचनबहुवचनान्येकश ' (१-४-१०२) इति निर्देशा(द)द्वित्व, भाष्यप्रामाण्या(द् द्वित्व) च ॥

## उपर्यध्यधसस्सामीप्ये । ७ ।

कथम् 'उपर्युपरिबुद्धीना चरन्तीश्वरबुद्धय ', सामीप्याभावाद् द्वित्वानुपपत्ते । उच्यते । उपरिबुद्धीनामुत्तरलबुद्धीनामुपरि ऊर्ध्वमीश्वरबुद्धयश्चरन्तीत्यर्थ । न [illegible] द्वित्वम् ॥

## प्रकारे गुणवचनस्य । १२ ।

कथं 'भीतभीत इव शीतमयूख' इति भारवि , इवशब्देन सादृश्यस्योक्तत्वाद् द्विरुक्त्यभावात् । उच्यते । 'आधिक्ये द्वे भवत' इति वार्तिकेनात्र द्वित्व, भीतत्वाधिक्य द्विरुक्तेनोच्यते, यथा 'दर्शनीयदर्शनीयाद्य रोचते' इत्यत्र दर्शनीय(ता)या आधिक्य मेतय द्विर्वचनात् प्रतीयत इति भाषावृत्ति । कथं 'नव नव प्रीतिरहो करोती'ति माघ , अनेन द्विरुक्ते 'कर्मधारयवदुत्तरेषु' (८ १ ११) इति कर्मधारयवत्त्वात् सुब्लुक्प्राप्ते , यथा माघ एव 'नवनवा वनवायुभिरादधे' 'प्रियतमे नवनवत्वमियाय' । उच्यते । प्रकारश्लेषोऽत्र द्रष्टव्य । तदयमर्थ —— प्रीतिरनव चिरन्तनमपि नव तनोतीत्यहो आश्चर्यमेतत् । कथं 'मन्द मन्द नुदति पवन' इति मेघ । तथा 'मन्द मन्द स्पृशति हरिणीमङ्कया साहमाङ्कम्' । उच्यते । 'तस्य परमाम्रेडितम्' (८-१-२) इति महासंज्ञाकरणेनात्र द्वित्व कल्पनीयम् । 'खिन्न खिन्न शिखरिषु पद न्यस्य गन्तासि यत्र क्षीण क्षीण परिलघु पय' इति मेघ ॥

* 'प्रयाग (मु ? न्तु )' इति ख पाठ

## द्वन्द्वं रहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु । १५ ।

कथं 'द्वन्द्व कलहयुग्मयोरि'त्यमर । तथा 'चार्थे द्वन्द्व' इति । उच्यते । योगविभागादिति भाषावृत्ति ॥

## युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वान्नावौ । २० ।

कथं 'गेये केन विनीतो वामि'ति, अभिहिते कर्मणि प्रथमान्तत्वात् षष्ठ्यादेरभावात् । उच्यते । एकदेशप्रयोगोऽयम् । यथा भीमो भीमसेन, तथा युवामित्येकदेशोऽय वामिति । द्वितियाग्रहण कर्मविभक्त्युपलक्षण वा । प्रमादोऽय वा ॥

इति शरणदेवविरचितदुर्घटवृत्तौ

अष्टमाध्याये प्रथम पाद ।

---

### अथ द्वितीयः पादः ।

## पूर्वत्रासिद्धम् । १ ।

कथं 'वृक्ष', रोरुकारस्येत्त्वे कर्तव्ये रुत्वस्यासिद्धत्वात् । उच्यते । 'रोरुकारस्यानुनासिकप्रतिज्ञानसामर्थ्यादित्सज्ञाया कर्तव्याया नासिद्धम्' इति 'उपदेश' (१-३ २) सूत्रे रक्षित । न, तदनुनासिकत्वप्रतिज्ञानम् 'अतो रोरप्लुतादप्लुते' (६-१-११३) इति 'हशि च' (६ १-११४) इत्यत्र सानुनासिकस्य रो परिग्रहो यथा स्यात्, तेन तरुवनमित्यत्र रुशब्दस्य मा भूदित्येवमर्थम् । एवं तर्हि उकारमकृत्वा रेफस्यैवानुनासिकत्व प्रतिज्ञात (स्यात्) यथा र(जस्य'पाभ्या)मित्यत्र व्यञ्जनस्य स्वरितत्वात् । कथं 'प्राणिय' 'नृतस्पृगय', 'क्विन्प्रत्ययस्य कु' (८ २ ६२) इत्यस्यासिद्धत्वात् । उच्यते । 'स्रग्दिगुष्णिगञ्चु' इति 'प्राग्रीश्वरान्निपाता' (१ ४-५६) इति निर्देशात् । कथम् '(अर्थ+य?)रजोपमा' इति, यलोपस्यासिद्धत्वात् । उच्यते । अकारान्तोऽय रजशब्द 'रजचरजार्थमि ति विश्व (?) रज इव (ऊर्ता?) इत्यर्थ । 'नोपधाया' (६-४ ७) इति निर्देशादसिद्धत्वानित्यत्वाद्वा ॥

## कृपो रो लः । १८ ।

कथं 'कल्सा' । उच्यते । 'लुटि च क्लृप' (१-३-९३) इति निर्देशात् ऋकारस्य लत्वम् । कथं तर्हि 'कृपा' । 'कृपेः सम्प्रसारणं चे'ति भिदादिपाठाल्लाक्षणिकत्वात् । कृपाणकर्पटकर्परादयस्तु उणादित्वात् सिद्धाः ॥

## धि च । २५ ।

'धि सलोपः सिचो लोपश्चकाद्धीति प्रयोजनम्' इत्येके । सामान्येनेति सर्वे । एवञ्च कथं पयो धीयते 'पयोधिः', अनेन सलोपात् । उच्यते । अन्तरङ्गस्यान्निमित्तनिमित्तिनोरेकपदे विधानात् । व्यवस्थितविभाषानुवृत्तेरिति भाषावृत्तिः ॥

## चोः कुः । ३० ।

कथम् 'अल्पान्तरम्', तथा 'अल्पाल्पान्तरनाद्' इति 'आयनादि' (७-१-२) सूत्रे न्यासः, कुत्वप्राप्तेः । उच्यते । अल्पान्तरनिर्देशादेव । कुत्वविधौ 'झलि सदेति वक्तव्यमि'ति वा । सडिति (सन्) सकारादारभ्य (आ) महिङो ङकारात् । (मैथमथमाजोश ?।) परसवर्णाद्वा सिद्धः । 'एवं निरुपपदस्य क्रुञ्चेः क्विनि कुत्वं न, 'युजिक्रुञ्चाञ्चे'ति निर्देशादिति भाषावृत्तिः ॥

## व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः । ३६ ।

कथं 'परिशाट्', भ्रजेरपाठात् । उच्यते । 'परौ भ्रजेः षश्च पदान्ते' इति 'अन्येभ्योऽपि दृश्यते' (३-२-१७८) इत्यत्रोक्तम् । उणादौ च सूत्रमिति रक्षितः ॥

## झलां जशोऽन्ते । ३९ ।

कथं 'जगत्वं', झकारस्य जशभावात् । उच्यते । 'झलां जश् झशि' (८-४-५३) इति निर्देशात् । 'अश्वा'दिनापि न षत्व, धातुग्रहणानुवृत्तेः । श्चुत्वं च नास्ति, 'शात्' (८-४-४४) इति निषेधात् । कथं 'वभौ मरुत्वानि'ति भट्टियमके(न इनम्भररतान्'पूर्वनम्मनुन्) इति जयमङ्गला, अनेन जश्त्वात् । उच्यते । 'तसौ मत्वर्थे' (१-४-१९) इत्यनेन भसंज्ञया पदसंज्ञाया बाधितत्वात् ॥

---

१. 'एव मन्तुर्नाभिर्मशिभाम्' इति वा 'एरमवनमशनम्' इति वा पाठः स्यात्.

## रदाभ्यां निष्ठातो नः पूर्वस्य च दः । ४२ ।

कथम् 'आर्त्तः', 'उपार्त्तः' । उच्यते । 'उपसर्गादृति धातौ' (६-१-९१) इति वृद्धेर्बहिरङ्गत्वात् । कथं 'निमित्तमि'ति, मिदेर्नत्वभावात् । उच्यते । 'तस्य निमित्तम्' (५-१-३८) इति निर्देशात् ॥

## क्विन्प्रत्ययस्य कुः । ६२ ।

कथं 'दृग्भ्यां', दृशेः क्विपि कुत्वम् । उच्यते । प्रत्ययग्रहणसामर्थ्यात् क्विन्प्रत्ययो यस्माद् दृष्ट इति बहुव्रीहौ अन्यप्रत्ययान्तादपि पदान्ते कुत्वमिति भागवृत्तिः। कथं तर्हि 'रज्जुसृड्भ्याम्' । उच्यते । 'नशेर्वा' (८-२-६३) इति विभाषया सृजेर्न कुत्वमिति न्यासः । कथं 'विश्वसृग्विधिरि'त्यमरः । व्यवस्थित-विभाषात्वात् सृजेश्च कुत्वभावः । प्रसिद्धपदे तु न्यङ्क्वादित्वात् कुत्वमत्रोक्तम् । भाषावृत्तौ तु क्वचिदेवान्यप्रत्ययान्तस्य कुत्वमुक्तं सामर्थ्याविशेषा प्रसिद्धेः ॥

## रोऽसुपि । ६९ ।

कथम् 'अहोवचनविन्यासः पठ्यते नच बुध्यते' (?) अनेनाहर्भागवद् रेफादेश उत्वाभावात् । उच्यते । अहोरूपस्य निर्माणमिति पाठः कार्यः । अत्र 'रूपरात्ररथन्तरेषूपसंख्यानं कर्तव्यमि'ति रेफं बाधित्वा रुत्वविधानात् ॥

## हलि च । ७७ ।

कथं 'ष्ठीवनं' 'सीवनम्', हल्परत्वाभावात् । उच्यते । पृषोदरादित्वाद् गुणाभावो दीर्घश्च । 'ष्ठिविसिव्योर्दीर्घश्चे'ति चान्द्रसूत्रम् ॥

## उपधायां च । ७८ ।

कथं वीधातो'र्विव्यतुर्विव्युरि'ति । नचानेन दीर्घे ह्रस्वो भविष्यति, पूर्वत्रासिद्धत्वात् । 'अचः परस्मिन्' (१-१-५७) इति स्थानिवत्त्वात्[1] हल्परत्वाभावात् । कथं चतुर इच्छति 'चतुर्यिते'ति । अनेन दीर्घ स्यात् । उच्यते । असुपीत्यनुवृत्तस्य षष्ठ्यन्तेन विपरिणामात् सुब्धातोर्नेति सम्बन्धात् सुब्धातोर्न भवति, गीर्भ्यामिति सुप्यपि भवतीति भाष्यम् ॥

इति शरणदेवविरचितदुर्घटवृत्तौ
अष्टमाध्याये द्वितीय पादः ।

१. स्थानिवत्त्वादिति । 'पूर्वत्रासिद्धे न स्थानिवद्' इत्य... वणः प्रत्ययाश्रयत्वेन बहिरङ्गतयासिद्धत्वं द्रष्टव्यम्

अथ तृतीयः पादः ।

## मतुवसो रु सम्बुद्धौ छन्दसि । १ ।

## पुमः खय्यम्परे । ६ ।

कथं 'पु(स्का * का)ण्डमि'ति, अनेन रुत्वभावात् । उच्यते । असाधुरेवायम् । पुस्काण्डमिति पाठ ॥

## नश्छव्यप्रशान् । ७ ।

कथं 'महाँ हि यत्नस्तव देवदारौ' इति । उच्यते । महान् हि यत्न इति पाठ ॥

## खरवसानयोर्विसर्जनीयः । १५ ।

कथं 'रथातिगा', रेफात् (पूर्वस * पर)वर्णाभावाद् अवसानविषयत्वाद् रेफस्य विसर्जनीयाभावात् । उच्यते । रेफेण पदस्य विशेषणे रेफान्तस्य पदस्य विसर्जनीय । अनुन्यासकारस्तु अवसानस्यापि बौद्ध परत्वमाश्रितवान् । विसर्जनीय इति कालापाना बिन्दुद्वयस्य सज्ञा ॥

## लोपः शाकल्यस्य । १९ ।

कथं 'गवित्याह', वलोपप्रसङ्गात् । उच्यते । पदान्तराभावादिति 'सम्बुद्धौ शाकल्यस्ये'त्यत्रानुन्यास ॥

## नश्चापदान्तस्य झलि । २४ ।

कथं 'श्रुवलय वलयन् मरुदायर्यौ' इति माघ । वलयन्निति पदान्तनकारस्यानुस्वाराद्यमकम् । न चानुस्वारव्यवधानाद् व्यपेतयमकम्, अव्यपेतयमकप्रकरणात् । उच्यते । व्यञ्जनस्य यमके अव्यवधायकत्वाद् वल्यन्नित्येवमेवास्तु ॥

## कुप्वोः ≍क≍पौ च । ३७ ।

कथं 'भास्कर', अनेन ≍कादेशात् । उच्यते । 'दिवाविभानिशाप्रभाभास्कर' (३-२-२१) इति निपातनात् । भाषावृत्तौ तु भास्करशब्द कस्कादिषु पठ्यते ॥

## इदुदुपधस्य चाप्रत्ययस्य । ४१ ।

**कथं** 'कान्तः सर्वगुणोपेतो बाले! दुःखेन लभ्यते' इति कण्ठाभरणम्। हे बाले! दुःखेन लभ्यते इत्यर्थः । उच्यते। 'सुख दुःख तत्क्रियायामि'ति विसर्जनीयोपधो धातुः पठ्यते । तस्येदं रूपम्। **कथं** 'मातुः करोति' । कस्कादिषु भ्रातुष्पुत्रशब्दपाठाद् एकादेशनिमित्तादिणः परस्य विसर्जनीयस्य षत्वं नास्तीति भाष्यम् ॥

## तिरसोऽन्यतरस्याम् । ४२ ।

**कथं** 'तिरस्कृत्य जरामिभाविने'ति माघः, कथं 'गौरीमुखतिरस्कारलज्जयेव न वर्धते' इति, गतिग्रहणानुवृत्तेः । गतित्वं च 'तिरोऽन्तर्धौ' (१-४-७१) इत्यन्तर्धौ । **उच्यते** । अन्तर्धिग्रहणमसन्निधानोपलक्षणार्थं द्रष्टव्यम् । तिरस्कारे चासन्निधान भाव्यते । केचिदिह गतिग्रहणं नानुवर्तयन्तीति भाषावृत्तिः ॥

## षष्ठ्याः पतिपुत्रपृष्ठपारपदपयस्पोषेषु । ५३ ।

**कथं** '*श्रियः पतिः श्रीमति शासितुं जगदि*'ति । '**वा छन्दसि**' (६-१-१०६) इत्यनुवृत्तेः । **कथं** तर्हि 'वाचस्पतिरुवाचे'ति । **उच्यते** । कश्चिच्छान्दसा अपि भाषायां प्रयुज्यन्ते । कस्कादिषु वा द्रष्टव्यम् । एवं 'दिवस्पतिः' ॥

## आदेशप्रत्यययोः । ५९ ।

**कथं** '*प्रियस्य*', एकारस्य कण्ठतालव्यत्वात् । '*यो ह्युभयोस्स्थाने निष्पद्यते लभतेऽसौ प्रत्येकमपि व्यपदेशमि*'ति कण्ठ्यत्वात् कण्ठ्येन सावर्ण्यादेकारग्रहणेन ग्रहणात् षकारः स्यात् । न च प्रयत्नभेदः । 'अ अ' (८-४-६८) इति संवृतोऽप्यकारो विवृतः प्रतिज्ञायते । 'एचौ विवृततरावि'ति प्रकर्षदोषो नास्ति, आतो विवृतत्वाश्रयादिति रक्षितः । न चैवं गौरित्यत्र सम्बुद्धिलोपः स्यात् । 'ए ओङ्' इति ङकाराद् एङचोस्सावर्ण्याभावात् । उच्यते । व्यक्तौ सावर्ण्याभावान्न षत्वम् । लिङ्गं चात्र 'अङ्गस्य' (६-४-१) इति । अवश्य चैतत् । अन्यथा दासीष्टेत्यत्र षत्वं स्यात् । (वयस्या! वेला)स्वीति निर्देशान्न च 'नाज्झलौ' (१-१-१०) इति निषेधः, अगृहीतसवर्णानामचां प्रतिषेधवचनात् । अथ (च) न्यासोऽसङ्गतः स्यात् । 'अत्राप्येषंक्रमेण षत्वाभावाद् इण्ग्रहणादि'ति न्यासः । कथं 'निंस्से', 'नुंविसर्जनीय'

(८-३-९८) इत्यनुवृत्तेः षत्वभावात् । उच्यते । प्रत्येकं व्यवधानाभ्युपगमात् । 'पुंस्वि'त्यत्र न भवति, नुंस्थानिकानुस्वारोपलक्षणार्थत्वात् ॥

## उपसर्गात्सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जाम् । ६५ ।

कथं 'दुःस्थः' 'सुस्थः' 'सुस्थितः' । उच्यते । उपसर्गप्रतिरूपकत्वादिति भाषावृत्तिः । कथम् 'अतिस्तुतमि'ति । 'अतिरतिक्रमणे च' (१-४-९५) इति पूजातिक्रमणयोः कर्मप्रवचनीयता ॥

## अवाच्चालम्बनाविदूर्ययोः । ६८ ।

कथम् 'अवष्टब्धः' । उच्यते । 'ष्टभि स्कभि प्रतिबन्ध' इत्यस्य सुषामादित्वात्, 'अवष्टब्धनिष्टब्धौ चे'ति वचनाद्वा ॥

## अम्बाम्बगोभूमिसव्यापद्वित्रिकुशेकुशङ्क्वङ्गुमञ्जिपुञ्जिपरमेबर्हिर्दिव्यग्निभ्यः स्थः । ९७ ।

कथं 'सव्येष्ठाः' 'सव्येष्ठारौ', 'परमेष्ठी' । औणादिका एते सुषामादिषु ज्ञेया इति भाषावृत्तिः ॥

## सात्पदाद्योः । १११ ।

कथं 'तनुपेकमलं कमलमि'ति वासवदत्ता । सेस्सकारस्यानेन षत्वनिषेधात् । उच्यते । अपपाठ एवायम् । कथं 'त्रिष्टुप्' 'अनुष्टुप्', षत्वलक्षणाभावात्, 'स्तुभु स्तम्भ' इत्यस्य सोपदेशत्वात् । सुषामादित्वादिति । क्वचित् प्रतिस्तब्धः । कथं 'निष्टब्धाश्छात्राः' इति । निर्पूर्वस्य स्तम्भेरिति वर्णदर्शनात् । नि(पूः/पू)र्वान्निपातनं च । तथा चान्द्रं सूत्रं – 'नि(ः)प्रतिभ्यां स्तम्भेरि'ति । 'खर्परे शरि वा लोपो वक्तव्यः' । निरस्सकारविसर्जनीयलोपः ॥

इति शरणदेवविरचितदुर्घटवृत्तौ
अष्टमाध्याये तृतीयः पादः ।

---

* 'पदान्त ए' इति रा.पाठः.

अथ चतुर्थः पादः ।

## रषाभ्यां नो णः समानपदे । १ ।

## पूर्वपदात् संज्ञायामगः । ३ ।

कथं 'पौलस्त्यो नरवाहनः', अनेन णत्वभावात् । उच्यते । क्षुभ्नादेराकृतिगणत्वात् । एवं 'दुर्नामा दीर्घकोशिका', 'पुनर्नवा तु शोफघ्नी', 'श्रीघनः शास्ता मुनिः', 'स्वर्भानुः', 'चित्रभानु'रित्यादि साध्यम् ॥

## वाहनमाहितात् । ८ ।

कथं 'धनदो नरवाहन' इति, अनेन णत्वविधानात् । उच्यते । अनाहितवाचित्वात् नरशब्दस्य, क्षुभ्नादिपाठाद् वा । एवं 'पूर्वपदात्' (८-४-३) इत्यपि न प्रवर्त्तते ॥

## एकाजुत्तरपदे णः । १२ ।

कथं 'ग्रामममपि चण्डालमि'ति । उच्यते । क्षुभ्नादित्वात् । णादेशो (घ)-व्यवाये नेष्यत इति तु भाष्यम् ॥

## कुमति च । १३ ।

कथं 'दुःखेन(?)भोजयितुमाशयिता शशाक' इति माघः । उच्यते । 'पात् पदान्तात्' ८-४-३९) इति निषेधात् । क्षुभ्नादित्वादिति सुभूतिः । कथं 'शास्त्रवाक्यानी'ति 'उपदेश' (१-३-२) सूत्रे वृत्तिः । तथा ('तीर्थज्ञानमि'ति[२]) 'द्वन्द्वे च' (१-१-३१) इति वृत्तिः । तथा 'चन्द्रगोमिनामि'ति । क्षुभ्नादित्वात् ॥

## प्रातिपदिकान्तनुंविभक्तिषु च । ११ ।

कथं 'प्रेन्वनम्', नुमाश्रयणत्वात् । उच्यते । साहचर्यात् प्रत्त्यासत्तेर्वा प्रातिपदिकाद्विहितस्य नुमो ग्रहणात् । नैतदस्ति 'प्रेण्वनमि'त्यनुपदकारेण नुम उदाहरणमुपन्यस्तं; तत्र स्यात् । उच्यते । मतभेदो द्रष्टव्यः । प्रेन्वनमित्याद्यसमासो वा उपसर्गप्रतिरूपकत्वात् । इह पूर्वपदादिति वर्तते । कथं (प्रकानाः?) 'क्षत्रिययूनाम्' । उच्यते । क्षुभ्नादित्वादिति भाषावृत्तिः ॥

---

१. 'दुःखेन' इति पाठं मन्यते इति भाति २. आदर्शद्वयेऽपि एतत् सूत्रमिदं लिखितम्.

## उपसर्गादसमासेऽपि णोपदेशस्य । १४ ।

कथं 'दुर्नीतं' 'दुर्नयामि'ति । उच्यते । उपसर्गप्रतिरूपकत्वादिति भाषावृत्तिः । यद्येवं 'पात् पदान्तात्' (८-४-३५) इत्यत्र 'षादिति किमि'त्युक्त्वा 'निर्णयः दुर्णय.' इत्युक्तम् । तद्याहन्यते । न । तत्रोपसर्गग्रहणं भविष्यति ॥

## कृत्यचः । २९ ।

कथं 'प्रख्यानं' 'प्रध्यानमि'ति, अनेन णत्वात् । उच्यते । 'वमोर्वा' (८-४-२३) इत्यतो वाग्रहणमनुवर्तते मण्डूकप्लुतिन्यायेन, तस्य व्यवस्थितविभाषात्वात् ॥

## इजादेः सनुमः । ३२ ।

कथं 'प्राङ्गणे पान्तु युष्मानूष्माणमि'ति मयूरः, इजादेरेवेति नियमात् णत्वाभावात् । 'अङ्गणमिति पृषोदरादित्वाण्णत्वमि'ति धातुप्रदीपिका । अन्ये त्वत्र णत्वं नेच्छन्त्येव । 'अङ्गणं चत्वराजिरे' इत्यमरः । अपपाठ एव । शतकेऽपि प्राङ्गने इत्येव पाठः । 'अचलाङ्गनमङ्गने' इति माघानुप्रयोगः ॥

## पदान्तस्य । ३७ ।

कथं 'कृतकर्म(ण')) इति, लुप्तविभक्तौ प्रत्ययलक्षणत्वेन णत्वनिषेधात् । 'उत्तरपदत्वे चापदादिविधावि'ति निषेधात् । 'पदव्यवायेऽपि' (८-४-३८) इत्यत्र हि मापकुम्भवपनेनेत्यादिसिद्धये रक्षितेनोक्तं—'सात्पदाद्योः' (८-३-१११) इत्यत आरभ्य यो विधिः स सर्वः पदादिविधिरिति । ए(वञ्च? तच) विधिरित्यस्योपलक्षणार्थत्वात् 'पात् पदान्तादि'(८-४-३५)त्यत्र सप्तमीसमासाश्रयणाल्लभ्यते । तद्धि 'सुसर्पिष्केणे'त्येतदर्थम् । तच्चैव भवति नान्यथा । ततश्चाणत्वं पदादिवि(धेः?धि)रेवेति । उच्यते । 'भावकर्मणो.' (१-३-१३) इति निर्देशात् । तद्वदत्र ॥

## स्तोः श्चुना श्चुः । ४० ।

कथं 'शत्रून् जयति' । उच्यते । असंहितायां भविष्यति । कथम् 'अल्पाच्तरमि'ति । उच्यते । 'नन्द्यर्जौ भवनाद्' इति निर्देशादिति 'अल्पाच्तरम्' इत्यत्र रक्षितः । कथं 'अस्त्वम्' । 'शात्' (८-४-४४) इति प्रतिषेधान्न श्चुत्वम् । 'प्र-

श्चा'दिना (८-२-३६) च न षत्वं, धातुग्रहणानुवृत्तेः । कथं 'मज्जति' 'लज्जते' । 'झलां जश् झशि' (८-४-५३) इति सस्य दकारे तस्यानेन जकारो न युक्तः, पूर्वत्रासिद्ध-त्वात् । उच्यते । 'मस्जिनशोर्झलि' (७-१-६०) ? इति निर्देशादिति न्यासः । यद्वा 'गाङ्कुटादि'(१-२-१)सूत्रे रक्षितेनोक्तं—"निशाशब्दस्य निश्भावे 'झलां जशोऽन्ते' (८-२-३९) इति जकारे सप्तमीबहुवचनस्य श्चुत्वेन तालव्ये शकारे जकारस्य चर्त्वेन चकारे निच्शु इति रूपम् । 'शश्छोऽटि' (८-४-६३) इति छकारे निच्छु इति रूपमि"ति । तथात्रापि श्चुत्वेन दन्त्यस्य तालव्यशकारव्यक्तौ पुनश्चु-त्वेन तस्य जकारे मज्जतीत्यादि यथा 'चिणो लुक्' (६-४-१०४) इत्यत्र वृत्तौ अकारितरामित्यत्र लुकि पुनस्त(यो?रपो)लुंङ् नास्ति 'असिद्धवदत्राभात्' (६-४-२२) इति । यद्वा झशि जश्त्वस्यासिद्धत्वात् श्चुत्वेन सयुक्तः शकारः । तस्य जश्त्वे जकार इति भाषावृत्तिः ॥

## ष्टुना ष्टुः । ४१ ।

कथं 'षड्धा' 'षोढा' । उच्यते । पृषोदरादित्वान्नित्यं ष्टुत्वम्, (ढ?उ) कारो वेत्येके । तेन षोढा षड्ढा इति । उभयं विकल्पितमित्यपरे । तेन षड्धेति न्यासरक्षितौ ॥

## खरि च । ५५ ।

कथम् 'अस्ति', अनेन सकारस्य तकारमसञ्जात् । उच्यते । 'सःस्यार्ध-धातुका'दन्यत्र सस्य 'खरि च' (८-४-५५) इति तकारो न भवति । अन्यथा 'आर्धधातुके इति किं वस्से आस्से' इत्ययुक्तं स्यात् । ज्ञापकसमुच्चये तु 'उदः स्थास्तम्भोः पूर्वस्य' (८-४-६१) इति ज्ञापकान्न सकारस्य 'खरि च' इति चर्त्वेन तकार इत्युक्तम् । प्रकृतिचरां प्रकृतिचरो भवन्तीति सकारस्य सकार एवेत्यर्थः ॥

## वा पदान्तस्य । ५९ ।

कथं 'पुंवद्' इति । वकारस्य दन्त्यौष्ठ्यत्वात् परस्य सवर्णो वकारो नास्ति । उच्यते । अन्तस्स्था द्विप्रभेदाः । तेन सानुनासिको वकारो युक्त एव । ततश्च पुँव्वत् पुंवदिति भवति । एवञ्च 'प्रमादलिखित च तत्' । यदि दन्त्यौष्ठ्येन

१. 'भूमतीनां डिति च (५-१-१६) इति निर्देशादिति' इति पाठः स्यात्.

परसवर्णपक्षे वकार एव सानुनासिको भवति, ततश्च पुर्व्वत् पुंवदिति स्यात् । यतः पुंवदस्तीत्यर्थविवक्षायां क्विपि तस्य साधनं विहितं, तत्सन्दि(ग्धमि)ति । उच्यते । 'बद स्थैर्ये' इत्यस्मात् क्विप्[1] । पवर्गवकारादित्वात् सेत्स्यति ॥

## झरो झरि सवर्णे । ६५ ।

'कथम् अष्टधातौ भवञ्यामप्रस्तावे 'अनचि च' (८-४-४७) इति द्वित्वे कृते एकदकारलोपोऽनेनोक्त', अत्र वृत्तौ हल्ग्रहणानुवृत्तेः । प्रत्युदाहरणं च वाग्मीति द्रष्टव्यम् । तथा 'वाचो ग्मिनि.' (५-२-१२४) इत्यत्र भाषावृत्तिः 'द्विगकारनिर्देशो वाग्मी'ति । अवश्य हल्ग्रहणानुवृत्तिर्ज्ञेया । अन्यथा 'ढो ढे लोपः' (८-३-१३) इत्यपार्थकमेव स्याद्, अनेनैव तु लोपसिद्धेः । उच्यते । लेखकप्रमाद एव सः । यद्वा केचिद्धलनुवृत्तिं नेच्छन्ति । वाग्मीति एकगकारो दृश्यते । ढलोपश्च नियमार्थ एव स्यात्[2] । व्यावृत्तिश्च लिड्ढौकत इत्यादि "

इति शरणदेवविरचितदुर्घटवृत्तौ

अष्टमाध्याये चतुर्थः पाद ।

दुर्घटवृत्तिः समाप्ता ।

---

१. क्विपिति । एवध पुमानिव स्थिरा भाचित् स्त्र्यर्थ..  २. नियमार्थ इति । नियमश्च ढे टस्यैव झरो लोपो नान्यस्येति.

# शुद्धिपत्रम् ।

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् | पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|---|---|---|
| २ | २१ | घः | षः | २३ | ११ | प्रणा | प्रहणा |
| ६ | ५ | लुब्धे | लब्धे | २६ | २५ | तः। इ | त इ |
| ७ | ३ | न्ती | न्ति | ३९ | ९ | द्वे | न्द्वे |
| ८ | ४ | णः | णम् | ४४ | २० | न | ण |
| १२ | २४ | पस्य | पयस्य | ४९ | २ | स्य | न्य |
| १४ | ७ | आ | अ | ७१ | ५ | घर्दगृ | दुर्घटगृ |
| १७ | १३ | वै | वे | ११५ | २५ | न | ने |
| १९ | १० | य. | यम् | १२५ | ११ | क्त्वा | प्त्वा |
| २१ | १४ | ह | हु | | | | |